कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक

हस्तलिखित संग्रह

दाखल क्र. M2418 विषय धर्मशास्त्र

नाव सटिक प्रश्नोपनिषदाख्य

लेखक/लिपीकार टिकाकार - शिवनारायण

पृष्ठ 66 काळ ........ पूर्ण/अपूर्ण

॥श्रीकृष्णानंदरामसमर्थ॥ श्रीक्षेत्रकाशि॥ देणारे भगनद्रऊशिवनारायण मीत्ति भाद्रपद कृष्ण पू शके १८५५॥

# अथ सटीकप्रश्नोपनिषद्भाष्यं प्रारभ्यते

प्र०उ० श्रीगणेशाय नमः ॥ आथर्वणे ब्रह्मा देवानामित्यादिमंत्रैरेवात्मतत्त्वस्य निर्णीतत्वात्तत्रैव ब्राह्मणेन तदभिधानं पुनरुक्तमित्याशंक्य तस्यैवेह वि टी०
१ स्तरेण प्राणोपासनादिसाधनसाहित्येनाभिधानान्न पौनरुक्त्यमिति वदन्ब्राह्मणमवतारयति ॥ मंत्रेति ॥ विस्तरेति ॥ मंत्रे हि द्वे विद्ये वेदितव्ये परा
चैवापरा चेति उक्त्वा तत्रापरा ऋग्वेदाद्यभिधेयेत्युक्तं ॥ सा च विद्या कर्मरूपा उपासनारूपा च तत्र द्वितीया द्वितीयतृतीयप्रश्नाभ्यां विव्रियते ॥ आद्या
कर्मकांडे विवृतेति नेह विव्रियते ॥ उभयोः फलं तु ततो वैराग्यार्थं प्रथमप्रश्ने स्पष्टीक्रियते ॥ परविद्या च अथ परा यया तदक्षरमधिगम्यत इत्युपक्रम्य
कृत्स्नेन मुंडके न प्रतिपादिता ॥ तत्रापि यथा सुदीप्तादित्यादिमंत्रद्वयोक्तार्थस्य विस्तरार्थं चतुर्थः प्रश्नः प्रणवोधनुरित्यत्रोक्तप्रणवोपासनविवरणार्थं

श्रीगणेशाय नमः ॥ मंत्रोक्तस्यार्थस्य विस्तरानुवादीदं ब्राह्मणमारभ्यते ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये एवं संवत्सरब्रह्म
चर्यसंवासादियुक्तैस्तपोयुक्तैर्ग्राह्या पिप्पलादादिवत्सर्वज्ञकल्पैराचार्यैर्वक्तव्या च न सा येन केन चिदिति विद्यां स्तौति ब्रह्मचर्यादिसा
धनसूचनाच्च तत्कर्तव्यता स्यात् ॥ सुकेशा नामतः भरद्वाजस्यापत्यं भारद्वाजः १ शैव्यश्च शिबेरपत्यं शैब्यः सत्यकामो नामतः २ सौर्याय
णिः सूर्यस्यापत्यं सौर्यस्तस्यापत्यं सौर्यायणिः छांदसः सौर्यायणी च गार्ग्यो गर्गगोत्रोत्पन्नः ३ पंचमः प्रश्न एतस्माज्जायते प्राण इत्यादिना
शेषेण मुंडकेनोक्तस्यार्थस्य स्पष्टीकरणार्थः षष्ठः प्रश्न इति इदं ब्राह्मणं तद्विस्तरानुवादीत्यर्थः अत एव विषयप्रयोजनादिकं तत्रैवोक्तमिति नेह पुन
रुच्यत इति बोध्यं ॥ आख्यायिकायाः ब्रह्मचर्यतपआदिसाधनविधानं पुराकल्पस्वरूपेण प्रयोजनांतरं चास्तीत्याह ॥ ब्रह्मचर्यादिसाधनेति ॥ सौर्याय
णिरिति वक्तव्ये दैर्घ्यं छांदसमित्यर्थः ॥ युवप्रत्यय इति कत्यस्य युवापत्ये विवक्षिते फक्प्रत्यये तस्यायनादेशे च कात्यायन इति सिद्ध्यतीत्यर्थः ब्रह्मपरा राम०
णां पुनर्ब्रह्मान्वेषणमयुक्तमित्यत आह ॥ अपरं ब्रह्मेति ॥ नन्वपरब्रह्मान्वेषणेनैव पुरुषार्थसिद्धेः किं परब्रह्मान्वेषणेनेत्याशंकते ॥ किं तदिति ॥ ॥ ॥ १

तस्य कोऽतिशय इत्यर्थः॥ तस्यानित्यत्वेन तत्प्राप्तेरप्यनित्यहेतुत्वेनाऽपुरुषार्थत्वात्परस्यैव नित्यत्वात् तत्प्राप्तेस्तज्ज्ञानमात्रसाध्यत्वेनापि नि
त्यत्वाच्च तस्यैवान्वेषणीयत्वमिति परस्वरूपकथनेनाह॥ यदिति॥ परं ब्रह्मान्वेषमाणानां कोऽतिशय इत्यत आह॥ तस्माश्चर्यमिति॥ तस्माश्चर्ये

कौसल्यो नाम तअश्वलस्यापत्यमाश्वलायनः ४ भार्गवो भृगोर्गोत्रापत्यं भार्गवः वैदर्भिः विदर्भेभवः ५ कबंधी नामतः कत्यस्यापत्यं कात्या
यनः ६ विद्यमानप्रपितामहादयो यस्य सः युवार्थे प्रत्ययः ते ह एते ब्रह्मपरा अपरं ब्रह्म परत्वेन गतास्तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः परं ब्र
ह्मान्वेषमाणाः किं तद्यन्नित्यं विज्ञेयमिति तत्प्राश्चर्ये यथाकामं यतिष्यामह इत्येवं तदन्वेषणं कुर्वंतस्तदधिगमायैष ह वै तत्सर्वं वक्ष्यती

ॐ भद्रं कर्णेभिरिति शांतिः ३ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वै
दर्भिः कबंधी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति

ति आचार्यमुपजग्मुः कथं
ते ह समित्पाणयः समिद्भारगृहीतहस्ताः संतो भगवंतं पूजावंतं पिप्पलाद आचार्यमुपसन्नास्तानेवमुपगतान् ह स किल ऋषिरुवाच भू
यः पुनरेव यद्यपि यूयं पूर्वं तपस्विन एव तपसेंद्रियसंयमेन तथापि इह विशेषतो ब्रह्मचर्येण श्रद्धया चास्तिक्यबुद्ध्यादरवंतः संवत्सरं
कालं संवत्स्यथ सम्यग्गुरुशुश्रूषापराः संतो वत्स्यथ ततो यथाकामं यो यस्य कामस्तमनतिक्रम्य यथाकामं यद्विषये यस्य जिज्ञासा तद्विष
यान् प्रश्नान् पृच्छथ यदि तद्युष्मत्पृष्टं विज्ञास्यामो

तदधिगमाय तदन्वेषणं कुर्वंतो यथाकामं यतिष्यामह इत्येवमभिप्रायेणेत्यन्वयः॥ समिदिति॥ स
मिद्ग्रहणं यथायोग्यं दंतकाष्ठाद्युपहारोपलक्षणार्थं तथापीत्यस्य तपसेत्यतः पूर्वमन्वयः विशेषत इत्यस्य पूर्वत्राप्यन्वयः निकृष्टमर्थमाह॥ यद्विषय इति

प्र० उ० २

अज्ञानाद्यर्थलाभावे हेतुमाह॥ प्रश्नेति॥ अत्र इति शब्दोऽध्याहार्यः सर्वप्रश्नानां निर्णयादज्ञानाद्यसंभवादित्यर्थः॥ परंब्रह्मान्वेषमाणा इत्युपक्रांते अस्मिन्ब्रह्मप्रकरणे प्रजापतिकर्तृकप्रजासृष्टिविषयप्रश्नप्रत्युक्त्योरसंगतिमाशंक्य प्रश्नप्रत्युक्तिरूपायाः श्रुतेस्तात्पर्यमाह॥ अपरविद्येति॥ तेषामसौ विरजो ब्रह्मलोक इति समुच्चितकार्यस्य ब्रह्मलोकस्य अथोत्तरेणेति तद्गतेर्देवयानमार्गस्य चेह वक्ष्यमाणत्वादित्यर्थः इदमुपलक्षणं केवलकर्मणां चेत्यपि द्रष्टव्यं केवलकर्मकार्यस्यापि चंद्रलोकस्य तद्गतेः पितृयाणस्य च ते षामेवैष ब्रह्मलोकः प्रजाकामा दक्षिणं प्रतिपद्यंत इति वक्ष्यमाणत्वादिति॥ यद्य

नुद्धतत्वप्रदर्शनार्थो यदि शब्दो नाज्ञानसंशयार्थः प्रश्ननिर्णयाद्वसीयते सर्वं ह वो वः एष्टं वक्ष्याम इति अथ संवत्सरादूर्ध्वं कबंधी कात्यायन उपेत्योपगम्य पप्रच्छ पृष्टवान् भगवन् कुतः कस्माद्ध वै इमा ब्राह्मणाद्याः प्रजाः प्रजायंत उत्पद्यंते तस्मै एवं पृष्टवते स हो

तेह समित्पाणयो भगवंतं पिप्पलादमुपसन्नास्तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इत्यथ कबंधी कात्यायन उपेत्य पप्रच्छ भगवन्कुतो ह वा इमाः प्रजाः प्रजायंत इति तस्मै स होवाच॥

वाच॥ अपरविद्याकर्मणोः समुच्चितयोः यत्कार्यं या गतिस्तद्वक्तव्यमिति तदर्थोयं प्रश्नस्तदपाकरणायाह॥ पीदमपि परब्रह्मजिज्ञासावसरे असंगतमेव तथापि केवलकर्मकार्यात्समुच्चितकर्मकार्याच्च विरक्तस्यैव तत्राऽधिकार इति ततो वैराग्यार्थमिदमुच्यते यद्यपि मुखतः सृष्टिः प्रतीयते तथापि तदुक्तौ प्रयोजनाभावात्सृष्ट्युक्तिव्याजेनापरविद्याफलमेवात्रोच्यत इति भावः॥ प्रश्न इति प्रतिवचनं चेत्यपि द्रष्टव्यं ताभ्यामेव तदुक्तेरिति तस्मै स होवाचेति प्रतिज्ञातं विशेषतो दर्शयति॥ तदपाकरणायेति॥

टी० राम० २

आद्यस्य सलिलस्य प्रजाकामः सन्नित्यन्वयः यथोक्तकारीति ज्ञानकर्मसमुच्चयकारीत्यर्थः॥ तद्भावभावित इति॥ प्रजापतिरहं सर्वात्मेत्युपासनाकालीनप्रजापतिभावनायुक्त इत्यर्थः पूर्वकल्पीयतद्भावभावितः एतत्कल्पादौ हिरण्यगर्भात्मना निर्वृत्तः प्रजापतिः सन् पश्चात्प्रजाकामः सन् तपः जन्मांतरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं अतप्यत अन्वालोचयत् चिंतादिना तत्संस्कारमुद्बोध्य ज्ञानमुत्पादितवानित्यन्वयः तत्र प्रथममादित्यचंद्रोत्पादनेन तद्भावमापद्य पश्चाच्चंद्रादित्यसाध्यसंवत्सरभावमापद्य एवमेव तदवयवायनद्वयमासपक्षाहोरात्रभावमापद्य ततस्तत्साध्यव्रीह्याद्य

प्रजाकामः प्रजा आत्मनः सिसृक्षुर्वै प्रजापतिः सर्वात्मा सन् जगत्स्रष्टाहमीत्येवं विज्ञानवान्यथोक्तकारी तद्भावभावितः कल्पादौ निर्वृत्तो हिरण्यगर्भः सृज्यमानानां प्रजानां स्थावरजंगमानां पतिः सन् जन्मांतरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं तपोऽन्वालोचयदतप्यत स एवं

प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते

तपस्तप्त्वा श्रौतं ज्ञानमन्वालोच्य सृष्टिसाधनभूतं मिथुनमुत्पादयते मिथुनं द्वंद्वमुत्पादितवान्॥ रयिं च सोमममन्नं प्राणं चाग्निमत्तारमेतावग्नीषोमावन्नादभूतौ मे मम बहुधा अनेकधा प्रजाः करिष्यत इत्येवं संचिंत्यांडोत्पत्ति न भावं रेतोभावं चापद्य तेन रेतसा प्रजाः सृजेयमित्येवं निश्चित्य प्रथमं रयिप्राणशब्दितचंद्रसूर्यद्वंद्वमुत्पादितवानित्याह॥ स एवमिति॥ रयिशब्देन धनवाचिना भोज्यजातं लक्षयित्वा भोज्यस्य सोमकिरणामृतयुक्तत्वात्तद्द्वारा सोमो लक्ष्यत इत्याह॥ रयिं चेति॥ एवं प्राणशब्देनापि अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति स्मृतेरग्नेः प्राणसंबंधादग्निर्भोक्ता लक्ष्यत इत्याह॥ प्राणं चेति॥ अग्नीषोमयोरंडांतर्गतत्वेन अंडोत्पत्त्यनंतरमुत्पत्तिरित्याशयेनाह॥ अं

प्र·उ· उद्यंतं वावादित्यमग्निरनुसमारोहतीति श्रुतेः सूर्याग्न्योरेकत्वमभिप्रेत्य अग्निं सूर्यपदेनाह॥ सूर्याचंद्रमसाविति॥ रयिप्राणौ श्रुतिः स्वयमेव व्या टी·
२ चष्ट इत्याह॥ तत्रादित्य इति॥ प्रजापतेरेव संवत्सरादिप्रजापर्यंतं स्रष्टृत्वं वक्तुं रयिप्राणयोः संवत्सरस्रष्टुः प्रजापतेरुपादानकत्वात् प्रजापत्यात्म
कत्वमाह॥ तदेतदेकमिति॥ कथमेकस्यात्तान्नं चेति भेद इत्याशंक्य तस्यैव गुणभावविवक्षयान्नत्वं प्राधान्यविवक्षयाचात्तृत्वमिति भेद इत्याह॥ गुणे
ति॥ रयिप्राणयोः कथं प्रजापत्यात्मत्वमिति शंकते॥ कथमिति॥ तत्र रयेः सर्वात्मकत्वात् प्रजापतित्वमित्याह॥ रयिरिति॥ अमूर्तस्यापि वाय्वादेः के

क्रमेण सूर्याचंद्रमसावकल्पयत्तत्रादित्यो ह वै प्राणोत्ताऽग्निः रयिरेव चंद्रमा रयिरेवान्नं सोम एव तदेतदेकमत्ता चान्नं च प्रजापतिरेकं तु
मिथुनं गुणप्रधानकृतो भेदः॥ कथं रयिर्वा अन्नं वै एतत्सर्वं किं तद्यन्मूर्तं च स्थूलममूर्तं च सूक्ष्मं मूर्तामूर्ते अत्त्रन्नरूपे रयिरेव तस्मात्त्वविभ

रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इत्यादित्यो ह वै प्राणो रयिरेव चंद्रमा रयिर्वा॥ एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मू
र्तिरेव रयिरथादित्य उदयन्यत्प्राचीं दिशं प्रविशति॥ क्तादमूर्ताद्यदन्यन्मूर्तं रूपं मूर्तिः सैव रयिरमूर्तेनाद्यमानत्वात्तथाऽमूर्तोपि प्रा
णोऽत्ता सर्वमेव यच्चाद्यं कथं अथ आदित्य उदयन् उद्गच्छन् प्राणिनां चक्षुर्गोचरमागच्छन्प्राचीं दिशं स्वप्रकाशेन प्रविशति व्याप्नोति॥

न विद्यमानत्वाद्रयित्वमित्यर्थः ननु मूर्तामूर्तयोरत्त्रन्नयोरुभयोरपि रयित्वे अन्नमेव रयिरिति कथमुक्तमित्याशंक्य मूर्तामूर्तविभागमकृत्वा सर्वस्य गु
णभावमात्रविवक्षया सर्वं रयिरित्युच्यते॥ यदा उभे विभज्य गुणप्रधानभावेन विवक्ष्येते तदा अमूर्तेन प्राणेन मूर्तस्याद्यमानत्वान्मूर्तस्यैव रयित्वमित्याह राम:
।तस्मादिति॥ रयिशब्दितस्यान्नस्य प्रजापतित्वार्थं सर्वात्मत्वमुक्त्वा प्राणस्यापि तदर्थमेव सर्वात्मत्वमुच्यते अथादित्य इति वाक्येनेत्याह॥ र[illegible]स्यादिना॥ २

यच्चाद्यं तदपि प्राणोऽतोऽत्ता प्राणोपि सर्वमेवेति सर्वात्मक इत्यर्थः स्वप्रकाशेनेति स्वकीयप्रकाशेन स्वप्रभयेत्यर्थः॥ अंतर्भूतानिति॥ यद्यपि प्रा
णस्यात्तृत्वमुक्तं तथापि रयिर्वा एतत्सर्वमित्यत्रामूर्तस्य प्राणस्यापि गुणभावविवक्षयान्नत्वमुक्तमिति तथोक्तं॥ स्वात्मावभासेति॥ स्वात्मप्रभारूपे
षु रश्मिष्वित्यर्थः व्याप्तत्वादिति संबद्धत्वादित्यर्थः तस्य प्रत्यक्षत्वमाह॥ स एष इति॥ वैश्वानर इति नराः जीवाः विश्वे च ते नराश्च विश्वानराः स एव वैश्वान
तेन स्वात्मव्याप्त्या सर्वान्तस्थान्प्राणान्प्राच्यांतर्भूतान्रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात्प्राणिनः ------ सन्निधत्ते स
न्निवेशयति आत्मभूतान्करोतीत्यर्थः तथैव यत्प्रविशति दक्षिणां यत्प्रतीचीं यदुदीचीं अध ऊर्ध्वं यत्प्रविशति यच्चांतरा दिशो कोणदिशोऽवां
तेन प्राच्यान्प्राणान्रश्मिषु संनिधत्ते यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदंतरा दिशो यत्सर्वं प्रकाशयति तेन स
र्वान्प्राणान्रश्मिषु सन्निधत्ते स एष वैश्वानरो विश्वरूपः प्राणोग्निरुदयते तदेतदृचाभ्युक्तं॥ तरा दिशो यच्चान्यत्सर्वं प्रकाशय
ति तेन स्वप्रकाशव्याप्त्या सर्वान्सर्वदिक्स्थान्प्राणान्रश्मिषु सन्निधत्ते स एषोऽत्ता प्राणो वैश्वानरः सर्वात्मा विश्वरूपः विश्वात्मत्वाच्च प्राणो
ग्निश्च स एवात्ता उदयते उद्गच्छति प्रत्यहं सर्वा दिशः आत्मसात्कुर्वन् तदेतदुक्तं वस्तु ऋचा मंत्रेणाभ्युक्तं॥ विश्वरूपं सर्वरूपं हरिणं रश्मिवंतं जा
तवेदसं जातप्रज्ञानं परायणं सर्वप्राणाश्रयं ज्योतिरेकं सर्वप्राणिनां चक्षुर्भूतं अद्वितीयं तपंतं तापक्रियां कुर्वाणं स्वात्मानं सूर्यं सूरयः विज्ञात
वंतो ब्रह्मविदः कोसौ यं विज्ञातवंतः सहस्ररश्मिरनेकरश्मिः शतधा
रः सर्वजीवात्मक इत्यर्थः विश्वरूपः सर्वप्रपंचात्मक इति भेदः॥ उक्तं वस्त्विति
॥ आदित्यस्य उक्तं माहात्म्यमित्यर्थः॥ विश्वरूपमित्यादि द्वितीयांतानां सहस्ररश्मिरित्यादि प्रथमांतानां सामानाधिकरण्येनान्वयायोगादध्याहारं करोति वा

प्रश्नोपनिषद्टीका ॥

समिथुनमुत्पादयतइत्युपक्रांतंमिथुनमुपसंहरति॥ यश्चासाविति॥ यश्चासौचंद्रमाः यश्चामूर्त्तः प्राणस्तदेकंमिथुनंसर्वंसर्वात्मकमित्यन्वयः॥ एतौमे
बहुधाप्रजाः करिष्यतइत्युक्तंतत्केनप्रकारेणेतिशंकते॥ कथमिति॥ रयिप्राणयोः संवत्सरादिद्वाराप्रजास्रष्टृत्वमित्याह॥ उच्यतइति॥ तदेवमिथुनमेव
संवत्सरः कालः सचप्रजापतिः प्राजापत्यात्मकमिथुननिर्वर्त्यत्वादित्याह॥ तन्निर्वर्त्यत्वादिति॥ तदुपपादयति॥ चंद्रेति॥ चंद्रनिर्वर्त्यास्तिथयः आदित्यनि
र्वर्त्यान्यहोरात्राणीतिविभागः॥ तन्निर्वर्त्यत्वेपिकालस्यकथंतदात्मकत्वेत्याशंक्यकार्यकारणयोरभेदादित्याह॥ तदनन्येति॥ नकेवलंतिथ्यादिद्वाराचं

ऽनेकधाप्राणिभेदेनवर्त्तमानः प्राणः प्रजानामुदयत्येषसूर्यः यश्चासौचंद्रमामूर्तिरन्नममूर्तिश्चप्राणोत्तादित्यस्तदेकमेतन्मिथुनंस
र्वंकथंप्रजाः करिष्यतइत्युच्यते तदेवकालः संवत्सरोवैप्रजापति स्तन्निर्वर्त्यत्वात्संवत्सरस्यचंद्रादित्यनिर्वर्त्यतिथ्यहोरात्रसमुदायो

विश्वरूपंहरिणंजातवेदसंपरायणंज्योतिरेकंतपंतं सहस्ररश्मिः शतधावर्तमानः प्राणः प्रजानामुदयत्येषसूर्यः संव
त्सरोवैप्रजापतिः॥ तस्यायनेदक्षिणंचोत्तरंच॥
हिसंवत्सरस्तदनन्यत्वाद्रयिप्राणस्तन्मिथुनात्मकएवेत्युच्यते तत्कथंतस्यसंव
त्सरस्यप्रजापतेरयनेमार्गौदक्षिणंचोत्तरंचद्वेप्रसिद्धेह्ययनेषण्मासलक्षणेयाभ्यांदक्षिणेनचोत्तरेणचयातिसविताकेवलकर्मिणांज्ञान
संयुक्तकर्मवतांचलोकान्विदधत्॥
द्रादिनिर्वर्त्यत्वंसंवत्सर—स्यकिंतुअयनद्वयद्वारापीतिवक्तुंतस्यायनेइत्यादिवाक्यंतत्सर्वंपूर्वकंव्या
चष्टे॥ तत्कथमिति॥ चंद्रादित्यनिर्वर्त्यत्वंकुतो हेत्वंतरादित्यर्थः॥ केवलकर्मिणांलोकान्विदधद्दक्षिणेनयातिज्ञानयुक्तकर्मवतांलोकान्विदधदुत्त
रेणयातीत्यन्वयः सवितेत्युपलक्षणं चंद्रस्यापिज्येष्ठादिर्दक्षिणायनंमार्गशीर्षादिरुत्तरायणमितिश्रुतिषुप्रसिद्धेः ततश्चकर्मिणांलोकान्विधातुंतयो

तन्निमित्तत्वाच्चायनद्वयप्रसिद्धेस्तन्निर्वर्त्यत्वं तयोरयनयोरितितद्द्वारासंवत्सरस्यापितन्निर्वर्त्यत्वमित्यर्थः॥ चंद्रादित्ययोः कथंलोकविधायकत्वमिति
शंकते॥ कथमिति॥ चंद्रादित्यनिर्वर्त्यदक्षिणोत्तरायणद्वारालोकप्राप्तेः प्राप्तस्यलोकस्यापिचंद्रादित्यात्मकत्वाच्चतयोस्तद्विधायकत्वमिति तद्येहवाइ
त्यादिवाक्येनपरिहरति॥ तत्रेति॥ इष्टंचेति॥ अग्निहोत्रंतपःसत्यंवेदानांचानुपालनं॥ आतिथ्यंवैश्वदेवश्चइष्टमित्यभिधीयते॥ वापीकूपतटाकादि

कथंतत्रचब्राह्मणादिषुयेहवैतदुपासतइतिक्रियाविशेषणोद्वितीयस्तच्छब्दः इष्टंचपूर्तंचइष्टापूर्तेइत्यादिकृतमेवोपासतेनाकृतंनित्यं
तेचांद्रमसंचंद्रमसिभवंप्रजापतेर्मिथुनात्मकस्यांशंरयिमन्नभूतंलोकमभिजयंतेकृतरूपत्वाच्चांद्रमसस्यतेतत्रैवचकृतक्षयात्पुनराव

तद्येहवैतदिष्टापूर्तेकृतमित्युपासतेतेचांद्रमसमेवलोकमभिजयंतेतएवपुनरावर्तंतेतस्मादेतऋषयःप्रजाकामादक्षि
णंप्रतिपद्यंतएषहवैरयिर्यःपितृयाणः॥ र्तंत इमंलोकंहीनतरंवाविशंतीतिह्युक्तंयस्मादेवंप्रजापतिमन्नात्मकंफलत्वेनाभिनि
र्वर्तयंतिचंद्रमिष्टापूर्तकर्मणाएतेऋषयःस्वर्गद्रष्टारः प्रजाकामाः प्रजार्थिनोगृहस्थास्तस्मात्स्वकृतमेवदक्षिणंदक्षिणायनोपलक्षितंचंद्रं
प्रतिपद्यंतेएषहवैरयिरन्नंयःपितृयाणःपितृयाणोपलक्षितश्चंद्रः॥ अथोत्तरेणायनेनप्रजापतेरंशंप्राणमत्तारमादित्यमभिजयंते

देवतायतनानिच॥ अन्नप्रदानमारामःपूर्तमित्यभिधीयतेइतितयोर्भेदः कृतमित्युपासतइतिकृतशब्दोपरितनमितिशब्दंइष्टापूर्तेइतिपूर्तशब्दोपर्यु
कृष्यआदिशब्दपर्यायतयाव्याचष्टे॥ इत्यादीति॥ दत्तमादिशब्दार्थः॥ कृतमेवोपासतेकार्यमेवानुतिष्ठंतीत्यर्थः॥ इदंचविशेषणंपुनरावृत्तौहेतुतयोक्तंकृत
रूपेत्यादिजन्यत्वाच्चंद्रस्यापिकृतत्वेनानित्यत्वात्पुनरावृत्तिरित्याह॥ कृतरूपत्वादिति॥ पुनरावृत्तौमंत्रवाक्यंप्रमाणयति॥ इमंलोकमिति॥ अथेतिमार्गा



त्तरां भार्गीयशब्दः प्रजापत्यात्मकविषययेति तत्ता
दात्म्यविषययेत्यर्थः॥

आदित्यमभिजयंतइति पूर्वमन्वयार्थमुक्तमिदानीं व्याख्यानार्थमुक्तमिति द्रष्टव्यं सामान्यमिति समष्टिरूपमित्यर्थः॥ विद्यावतामिति॥ कर्मान
धिकारिणामतएव केवलोपासनवतामित्यर्थः॥ कर्मिणां च ज्ञानवतामित्यर्थः कर्मिणां च ज्ञानवतामिति समुच्चयवतामित्यर्थः ननु केवलकर्मिणाम
प्यादित्यप्राप्तौ अपुनरावृत्तिर्भविष्यतीत्याशंक्य तेषामादित्यप्राप्तिरेव नास्तीति वक्तुं इत्येष इति वाक्यं व्याचष्टे॥ इतियस्मादिति॥ तस्मात्तेषामादित्यप्राप्तिर
नाशंक्येति शेषः॥ यद्वा तस्यायने इत्यारभ्य इत्येष निरोध इत्यंतं श्रुतिवाक्यं अयनयोः रयिप्राणरूपत्वप्रतिपादनपरतया व्याख्येयं तथाहि संवत्सरस्य र

केन तपसेंद्रियजयेन विशेषतो ब्रह्मचर्येण श्रद्धया विद्यया च प्रजापत्यात्मविषयया आत्मानं प्राणं सूर्यं जगतस्तस्थुषश्चान्विष्याहमस्मीति
विदित्वादित्यमभिजयंते अभिप्राप्नुवंति एतद्वै आयतनं सर्वप्राणानां सामान्यमायतनमाश्रयं एतदमृतमविनाशि अभयमतएव भय

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयंत एतद्वै प्राणानामायतनमेतदमृतमभयमेत
त्परायणमेतस्मान्न पुनरावर्तंत इत्येष निरोधः वर्जितं न चंद्रवत् क्षयवृद्धिभयवत् एतत्परायणं परागतिः विद्यावतां कर्मिणां च
ज्ञानवतां एतस्मान्न पुनरावर्तंते यथेतरे केवलकर्मिण इति यस्मादेषोऽविदुषां निरोधः आदित्याद्धि निरुद्धा अविद्वांसो नैते संवत्सरमादि
त्यमात्मानं प्राणमभिप्राप्नुवंति स हि संवत्सरः कालात्मा अविदुषां निरोधः॥ यि प्राणमिथुननिर्वर्त्यत्वेन रयिप्राणरूपत्वं च वक्तव्यं तत्कथमिति एकेति॥
तत्कथमिति॥ तदवयवयोरयनयोस्तद्रूपत्वं वक्तुं तयोः प्रथमं सिद्धिमाह॥ तस्येति प्रसिद्धिमेवाह॥ याभ्यामिति॥ एवमपि कथं तयोस्तदात्मकत्वमित्याह
कथमिति॥ दक्षिणायनस्य रयित्वं वक्तुं कर्मिणां रयिरूपचंद्रनिर्वर्तकत्वमाह॥ तस्मादिति॥ लोकमिति सोमरूपं शरीरमित्यर्थः॥ तस्य कर्मकृतत्वं पुनरावृ

टी॰ रामः ५

रयिरूपचंद्रस्यदक्षिणायनद्वाराप्राप्यत्वात्तस्यायनस्यतदंतर्भावइतिवक्तुंतस्यकर्मिभिःप्राप्यत्वमाह॥यस्मादिति॥एवंचतस्यरयित्वंसिद्धमित्या
ह॥एषइति॥पितृयाणोपलक्षितइतितस्याप्यइत्यर्थः॥ततश्चतद्विशेषणस्यायनस्यापिरयित्वमित्यर्थः॥इदानीमुत्तरायणस्यप्राणत्वमाह॥अ
थेतिप्राणरूपादित्यप्रापकत्वादुत्तरायणस्यतस्यापिप्राणत्वमितिसंवत्सरस्यरयिप्राणमिथुनात्मकत्वमितितत्कार्यत्वंयुक्तमितिभावः॥अस्यकर्म
साध्यचंद्रवैलक्षण्यमाह॥एतद्वाइतिइतरत्सर्वंसमानंतस्मिन्नर्थेइतिसंवत्सरस्वरूपइत्यर्थः इयंकल्पनेतिपंचधाकर्मसाध्यचंद्रवैलक्षण्यकल्प

तत्रास्मिन्नर्थेएषश्लोकोमंत्रः पंचपादंपंचर्तवः पादाइवास्यसंवत्सरात्मनआदित्यस्यतैरसौपादैरिवर्तुभिरावर्ततेहेमंतशिशिरावेकीकृ
त्येयंकल्पनापितरंसर्वस्यजनयितृत्वात्पितृत्वंतस्यतंद्वादशाकृतिंद्वादशमासाआकृतयोअवयवाःआकरणंवाअवयवीकरणमस्यद्वाद

तदेषश्लोकः पंचपादंपितरंद्वादशाकृतिंदिवआहुःपरेअर्द्धेपुरीषिणं॥

शमासैस्तंद्वादशाकृतिंदिवः द्युलोकात्परेऊर्ध्वेअर्द्धेस्थानेतृतीयस्यांदिवीत्यर्थः पुरीषिणंपुरीषवंतमुदकवंतंआहुःकालविदः॥
अथतमेवान्येइमेउ॥परेकालविदःविचक्षणंनिपुणंसर्वज्ञंसप्तचक्रे नेत्यर्थः॥जनयितृत्वादिति॥संवत्सरात्मककालस्यसर्वजनकत्वादित्य
र्थः॥समानाधिकरणबहुव्रीहितयाव्याख्यायव्यधिकरणबहुव्रीहिर्वेत्याह॥आकरणंवेति॥अवयवीकरणमिति॥अवयवित्वेनकरणमित्यर्थः पक्षद्वयेपि
कृएवार्थः॥द्युलोकादिति॥आकाशरूपादंतरिक्षलोकादित्यर्थः॥अन्यथास्वर्गलोकात्परस्यचतुर्थत्वेनतृतीयस्यामित्यनन्वयापत्तेः॥उदकवंतमिति॥आ
दित्याज्जायतेवृष्टिरितिस्मृतेरित्यर्थः॥अन्येइत्यस्यपूर्वार्द्धगतेनआहुरित्यनेनसंबंधः॥उइतितुशब्दसमानार्थोनिपातः॥परेतुतमेवविचक्षणमाहुरित्यन्व

१ याभिरादित्यस्तपतिरश्मिभिस्ताभिःपर्जन्योवर्षति

२ मधुपुरीषंपिप्पलंक्षीरमितिवेदनिघंटेउदकनामानि

प्र·उ· तस्मिन्विचक्षणे सप्तचक्राद्यात्मके सर्वमिदंजगदर्पितमित्याहुरित्यर्थः॥ मतद्वयेपि कीदृशोर्थभेदइत्यत आह॥ यदीति॥ पूर्वमते ऋतूनां पादत्वकल्प टी·
६ नयामासानामवयवत्वकल्पनया आदित्यात्मना संवत्सरः काल एवोक्तः द्वितीये तु हेमंतशिशिरैौ पृथक्कृत्य षण्णांऋतूनामरत्वकल्पनया संवत्सर
स्य परिवर्तनगुणयोगेन चक्रत्वकल्पनया कालप्राधान्येन सर्वाश्रयत्वेन च स एवोक्तः पक्षद्वयेपि गुणभेदेन कल्पनाभेदेन च भेदः न धर्मिभेद इत्यर्थः॥

सप्तहयरूपेण चक्रे सततंगतिमति कालात्मनि षडरे षड्ऋतुमति आहुः सर्वमिदं जगत्कथयंति अर्पितमराइव रथनाभौ निविष्टमिति य
दि पंचपादोद्वादशाकृतिर्यदि वा सप्तचक्रः षडरः सर्वथापि संवत्सरः कालात्मा प्रजापतिश्चंद्रादिलक्षणोपि जगतः कारणं यस्मिन्निदं

अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति॥ मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मा
देत ऋषयः शुक्ल इष्टं कुर्वंति॥ श्रितं विश्वं॥ स एव प्रजापतिः संवत्सराख्यः स्वावयवे मासे कृत्स्नः परिसमाप्यते मासो वै प्रजापति
र्यथोक्तलक्षण एवं मिथुनात्मकस्तस्य मासात्मनः प्रजापतेरेको भागः कृष्णपक्षो रयिरन्नं चंद्रमाः अपरो भागः शुक्लः पक्षः प्राण आदि
त्योऽत्ताग्निर्यस्माच्छुक्लपक्षात्मानं प्राणं सर्वमेव पश्यंति॥ कारणत्वेनोक्तं जगदाश्रयत्वं हेतुमाह॥ यस्मिन्निति॥ संवत्सरस्यापि मासाहोरा
त्ररूपव्यतिरेकेण ऽऽषध्यादिजनकत्वाभावात्तस्य मासाद्यात्मकत्वमाह॥ स एवेति॥ यथोक्तेति॥ संवत्सररूपः रयिप्राणमिथुनात्मक इत्यर्थः॥ शु
क्लकृष्णयोरप्यविशेषे दर्शपूर्णमासादिकर्मानुष्ठानदर्शनात्तस्मादेत ऋषय इत्यादिवाक्यमनुपपन्नमित्याशंक्य शुक्लस्य प्राणात्मत्वज्ञानस्तुतिपरतया व्याच राम:
ष्टे॥ यस्मादिति॥ यस्मात्प्राणमेव सर्वात्मकमेव पश्यंति यस्माच्च प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते तस्मादित्यन्वयः ॥ ६

प्राणस्य शुक्लपक्षात्मकत्वात् कृष्णपक्षादि सर्वं जगतः प्राणात्मत्वात् प्राणद्वारा कृष्णपक्षस्यापि शुक्लपक्षत्वे सति कृष्णे कुर्वंतोपि प्रकाशात्मके शुक्ल एव कुर्वंतीति शुक्लपक्षे प्राणत्वज्ञानस्य स्तुतिरित्यर्थः॥ एतत्स्तुत्यर्थमेव ज्ञानरहितान्निंदति॥ इतर इति॥ ये तु सर्वात्मानं प्राणं न पश्यंति॥ अज्ञत्वात्तेषां शुक्लपक्षः प्राणत्वेनाज्ञायमानत्वादज्ञानात्मकः सन् कृष्णपक्षत्वमापद्यते॥ अतः शुक्ले कुर्वंतोपि अदर्शनात्मकत्वात्प्रकाशरहिते कृष्ण एव कुर्वंतीत्यर्थः इति तेनिं

तस्मात्प्राणदर्शिन एते ऋषयः कृष्णपक्षेपीष्टं यागं कुर्वंतः शुक्ल एव कुर्वंति प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मादितरे तु प्राणं न पश्यंतीत्यदर्शनलक्षणं कृष्णमात्मानमेव पश्यंति॥ इतर इतरस्मिन्कृष्णपक्ष एव कुर्वंति शुक्ले कुर्वंतोपि सोपि मासात्मा प्रजापतिः स्वावयवे अहोरात्रे परिसमाप्यते पूर्ववत्तस्याहरेव प्राणोत्ताग्निः रात्रिरेव रयिः पूर्ववत् प्राणमहरात्मानं वै एते प्रस्कंदंति निर्गमयंति शोषयंति वा स्वात्मनो विछि

इतर इतरस्मिन्नहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कंदंति ये दिवा रत्या संयुज्यंते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यंते॥ अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायंत इति॥ व्यापनयंति के ये दिवाऽहनि रत्या रतिकारणया सह स्त्रिया संयुज्यंते मिथुनं मैथुनमाचरंति मूढाः यत एवं तस्मान्न कर्तव्यमिति प्रतिषेधः प्रासंगिकः यद्रात्रौ संयुज्यंते रत्या ऋतौ ब्रह्मचर्यमेव तदिति प्रशस्तत्वाहतौ भार्यागमनं कर्तव्यमिति अयमपि प्रासंगिको विधिः॥ प्रकृतं तूच्यते सोऽहोरात्रात्मकः प्रजापतिर्व्रीहियवाद्यन्नात्मना व्यवस्थितः एवं क्रमेण

र्यं तदित्यर्थः॥ उक्तमर्थं श्रुत्यारूढं करोति॥ इतर इति॥ रयिः पूर्ववदिति॥ रयिरन्नं चंद्रमा इत्यर्थः॥ अन्हः प्राणत्वोक्तिप्रसंगादन्हि मैथुनं निषेधति॥ प्राणमिति॥ प्रकृतमिति॥ कुतो ह वा इमाः प्रजाः प्रजायंत इति पृष्टमित्यर्थः॥ पूर्वोक्तं सर्वमेतदुपयोगितयोक्तं न तु साक्षात्प्रकृतमिति

भा०॥ प्रश्नोप०॥

प्र॰उ॰ रयिप्राणसंवत्सरादिक्रमेणपरिणम्यव्रीह्याद्यात्मनाव्यवस्थितः सन् अन्नंवैप्रजापतिरन्नात्मकोजातः प्रजापतिरित्यन्वयः॥कथमिति॥ अन्नरूप
७ त्वेपितस्यकथंप्रजाजनकत्वमित्यर्थः॥ततइति॥भक्षितादन्नादित्यर्थः॥रेतइति॥शोणितस्याप्युपलक्षणंतुल्यत्वादिति॥ प्रजापतिव्रताचरणमात्रेण
नादृष्टफलंचंद्रलोकः प्राप्यतेमूर्खाणामपिप्रसंगादतआह॥इष्टापूर्तेति॥ चांद्रमसोब्रह्मलोकइतिअपरब्रह्मणः प्रजापतेरंशत्वाद्रयिरूपस्यचंद्रस्यब्र

परिणम्यतदन्नंवैप्रजापतिःकथंततस्तस्माद्धवैरेतोनृबीजंतत्प्रजाकारणंतस्माद्योषितिसिक्तादिमामनुष्यादिलक्षणाः प्रजाः प्रजायंते
यत्पृष्टंकुतोहवैइमाः प्रजाः प्रजायंतइतितदेवंचंद्रादित्यमिथुनादिक्रमेणाहोरात्रांतेनान्नासृक्रेतोद्वारेणइमाःप्रजाः प्रजायंतइति
निर्णीतं॥तत्रैवंसतियेगृहस्थाहवैइतिप्रसिद्धिस्मरणार्थौनिपातौतत्प्रजापतेर्व्रतंऋतौभार्यागमनंचरंतिकुर्वंतितेषांदृष्टंफलमि

तद्येहवैतत्प्रजापतिव्रतंचरंतितेमिथुनमुत्पादयंतेतेषामेवैषब्रह्मलोकोयेषांतपोब्रह्मचर्यंयेषुसत्यंप्रतिष्ठितं तेषामसौवि
रजोब्रह्मलोकोनयेषुजिह्ममनृतंनमायाचेति॥१॥ दं किं तेमिथुनंपुत्रंदुहितरंचोत्पादयंतेअदृष्टंचफलंइष्टापूर्तदत्तकारिणांतेषा
मेवएषोयश्चांद्रमसोब्रह्मलोकः पितृयाणलक्षणः॥येषांतपःस्नातकव्रतादीनिब्रह्मचर्यमृतावन्यत्रमैथुनासमाचरणंब्रह्मचर्यंयेषुसत्य
मनृतवर्जनंप्रतिष्ठितमव्यभिचारितयावर्ततेनित्यमेवयस्तुतेषां॥यस्तुपुनरादित्योपलक्षितउत्तरायणः प्राणात्मभावोविरजः शुद्धोनचंद्र
ब्रह्मलोकवद्रजस्वलोवृद्धिक्षयादियुक्तो ह्मलोकत्वमित्यर्थः॥इष्टादिकारिणां॥तपआदिकमपिचंद्रलोकप्राप्त्यर्थमपेक्षितमित्याह॥येषांतपइति॥ राम:
तेषामसौविरजइत्यादिवाक्यंव्याचष्टे॥यस्त्विति॥उत्तरायणइति॥तेनप्राप्यइत्यर्थः॥प्राणात्मभावःअपरब्रह्मतयावस्थानमित्यर्थः॥असौकेषांतेषामितीतितेषा ७
यं ३

नयेषुजिह्ममित्यत्रजिह्मादिशब्दंव्यतिरेकप्रदर्शनेनव्याचष्टे॥ यथेत्यादिना॥ मायाग्रहणंतादृशानांदोषाणामुपलक्षणमितिवदन्वाक्यार्थंसंगृह्य
दर्शयति॥ मायेत्येवमिति॥ भिक्षुर्वितिपरमहंसव्यतिरिक्तानांकुटीचकादीनांग्रहणंतेषांब्रह्मलोकादपिविरक्तत्वेनतत्रानर्थित्वात्॥ इतिशब्दार्थ
माह॥ इत्येषेति॥ इतिप्रश्नोपनिषद्भाष्यविवरणेप्रथमः प्रश्नः समाप्तः॥ प्रश्नांतरस्यप्रथमप्रश्नेनसंगतिमाह॥ प्राणोऽत्तेति॥ अवधारयितव्यमितिअत्ता
विश्वस्यसस्यतिरित्यत्तृत्वस्यएषोऽग्निस्तपतीत्यारभ्यअराइवरथनाभौप्राणेसर्वंप्रतिष्ठितंप्रजापतिश्चरसिगर्भेत्वमेवप्रतिजायसेइत्यादिनाचप्र

ऽसौकेषांतेषामित्युच्यते॥ यथागृहस्थानामनेकविरुद्धव्यवहारप्रयोजनवत्त्वाज्जिह्मंकौटिल्यंवक्रभावोऽवश्यंभावितथानयेषुजिह्मं
यथाचगृहस्थानांक्रीडानर्मादिनिमित्तमनृतमवर्जनीयंतथानयेषुतत्तथामायागृहस्थानामिवनयेषुविद्यते॥ मायानामबहिरन्य
थात्मानंप्रकाश्यान्यथैवकार्यंकरोतिसामायामिथ्याचाररूपा॥ मायेत्येवमादयोदोषायेष्वधिकारिषुब्रह्मचारिवानप्रस्थभिक्षुषुनिमि

अथहैनंभार्गवोवैदर्भिः पप्रच्छ भगवन्कत्येवदेवाः प्रजांविधारयंतेकतरएतत्प्रकाशयंतेकः पुनरेषांवरिष्ठइतितस्मैसहोवाच॥

त्ताभावान्नविद्यंते॥ तत्साधनानुरूपेणैवतेषामसौविरजोब्रह्मलोकइत्येषाज्ञानयुक्तकर्मवतांगतिः पूर्वोक्तस्तुब्रह्मलोकः केवलकर्मिणां
चंद्रलक्षणइति॥ प्र० प्रथमः प्रश्नः॥ १॥ ॐ॥ प्राणोऽत्ताप्रजापतिरित्युक्तंतस्यप्रजापतित्वमत्तृत्वंचास्मिन्शरीरेऽवधारयितव्यमित्ययंप्रश्न

जापतित्वस्यउत्तरत्रवक्ष्यमाणत्वादित्यर्थः॥ इदमुपलक्षणंपूर्वंगतिश्रवणेनविरक्तस्यापिचित्तैकाग्र्यंविनावक्ष्यमाणात्मज्ञानासिद्धेस्तदर्थंमंदानांफल
विशेषार्थंचप्राणोपासनार्थंप्रश्नद्वयारंभः॥ तत्रापिश्रेष्ठत्वात्तत्त्वप्रजापतित्वादिगुणनिर्धारणार्थंद्वितीयःप्रश्नः॥ तदुत्पत्त्यादिनिर्धारणपूर्वकंतदुपा

ऊर्ध्वमेते॥

मनविषाणांशंतीयः प्रश्नश्चाहाद्रेऽष्टौ॥

प्र.उ. प्रज्ञाशब्देनशरीरमेवगृह्यतेनजीवस्तस्यप्राणधारकत्वेनतद्धार्यत्वाभावादित्याह॥शरीरेति॥विभक्तानामितिनिर्द्धारणेषष्ठी॥स्वमाहात्म्यख्याप टी.
८ नमिति॥अवकाशदानादिकंआकाशादीनांमाहात्म्यंतस्यख्यापनंतस्यलोकान्प्रतिप्रकटनंतत्प्रकाशयंतेकुर्वंतीत्यर्थः॥पाकंपचतीतिवत्अवकाशदा
नादिकंस्वस्वकार्यंसर्वलोकप्रकटनंयथातथाकृतरेकुर्वंतीत्यर्थः॥एषदेवइति॥वक्ष्यमाणाभिवदनादिव्यवहारसिध्यर्थंचेतनत्वंसंभावयितुंदेवइति विशे
षणंअभिमानिव्यपदेशस्तुविशेषानुगतिभ्यामितिन्यायेनआकाशाद्यभिमानिदेवताग्रहणार्थं॥तच्चविशेषणंवाय्वादिष्वपिसर्वत्रसंबध्यते॥वाक्ग्रहणं

अथानंतरंभार्गवोवैदर्भिःपप्रच्छहेभगवन्कत्येवदेवाःप्रजांशरीरलक्षणांविशेषेणधारयंतेविधारयंते१कतरेबुद्धींद्रियकर्मेंद्रियविभक्तानां
मेतत्प्रकाशनंस्वमाहात्म्यख्यापनंप्रकाशयंते॥२॥कोसौंतेषांवरिष्ठः३प्रधानःकार्यकरणलक्षणानामित्येवंपृष्टवतेतस्मैसहोवाच॥आकाशो

आकाशोहवाएषदेवोवायुरग्निरापःपृथिवीवाङ्मनश्चक्षुःश्रोत्रंचतेप्रकाश्याभिवदंति॥

हवाएषदेवोवायुरग्निरापःपृथिवीत्येतानिपंचमहाभूतानिशरीरारंभकाणिवाङ्मनश्चक्षुःश्रोत्रमित्यादीनिकर्मेंद्रियबुद्धींद्रियाणितेकार्यलक्ष
णाःकरणलक्षणाश्चतेदेवाआत्मनोमाहात्म्यंप्रकाश्यप्रकाश्याभिवदंतिस्पर्द्धमानाअहंश्रेष्ठतायै॥कथं॥वदंतिवयमेतद्बाणंशरीरंकार्यकरणसंघा
तमवष्टभ्यप्रासादमिवस्तंभादयो कर्मेंद्रियोपलक्षणार्थं चक्षुरादिग्रहणं ज्ञानेंद्रियोपलक्षणार्थमितिमत्वाह॥कर्मेंद्रियेति॥कार्यलक्षणाःशरीराकारेण
परिणताआकाशादयःकरणलक्षणानिइंद्रियाणि॥माहात्म्यमितिआकाशादीनामवकाशदानादिरूपं शरीरधारणैकदेशात्मकंप्रकाश्य स्वकार्यंप्रकाश्य राम:
सर्वलोकप्रकटंयथातथाकृत्वाअभिवदंतिअभितःसर्वतःकृत्स्नंशरीरधारणंप्रत्येकंवयमेवकुर्मइतिवदंतीत्यर्थः॥बाणमिति॥बवयोरभेदात्वातिकुत्सि ८

वादेशाद्देशांतरंगच्छतीतिवावर्णंवणमेवबाणंकार्यकरणसंघातंशरीरमित्यर्थः॥कथमेतदिति॥एतत्तुअहमेवैतदित्याद्युक्तंएवंयथाभूतंकथमित्यर्थः
॥उत्क्रांतवानिवेति॥अत्यंतोत्क्रांत्यभावादिवशब्दः॥निरपेक्षइतिस्वयमेवेत्यर्थः॥दृष्टांतेनेति॥तत्रयथेतिवक्ष्यमाणेनेत्यर्थः॥सूर्यस्तन्निवितिनपतीत्यत्र

ऽविशिथिलीकृत्यविधारयामोविस्पष्टंधारयामः मयैवैकेनायंसंघातोधिपतइत्येकैकस्याभिप्रायः॥तानेवमभिमानवतोवरिष्ठोमुख्यःप्राणउवा
चउक्तवान्मैवंमोहमापद्यथाऽविवेकतयाऽभिमानंमाकुरुत॥यस्मादहमेवैतद्वाणमवष्टभ्यविधारयामिपंचधात्मानंप्रविभज्यप्राणादिवृत्तिभे
दंस्वस्यकृत्वाविधारयामीत्युक्तवतिचतस्मिंस्तेऽश्रद्दधानाअप्रत्ययवंतोबभूवुः॥कथमेतदेवमिति॥सचतेषामश्रद्दधानतामालक्ष्याभिमाना

वयमेतद्वाणमवष्टभ्यविधारयामस्तान्वरिष्ठःप्राणउवाचमामोहमापद्यथाहमेवैतत्पंचधात्मानंप्रविभज्यैतद्वाणमवष्टभ्यविधा
रयामीतितेऽश्रद्दधानाबभूवुःसोभिमानादूर्ध्वमुत्क्रमतइवतस्मिन्नुत्क्रामति
दूर्ध्वमुत्क्रमतइवइदंउत्क्रांतवानिवसरोषान्निर
पेक्षस्तस्मिन्नुत्क्रामतियद्वृत्तं तद्दृष्टांतेनप्रत्यक्षीकरोतितस्मिन्नुत्क्रामति॥अथानंतरमेवेतरेसर्वएवप्राणाउत्क्रामंतेउच्चक्रमिरेतस्मिंश्च
प्राणेप्रतिष्ठमानेतूष्णींभवत्यनुत्क्रामतिसर्वएवप्रातिष्ठंतेतूष्णींव्यवस्थिताअभूवन्॥तत्तत्रयथालोकेमक्षिकामधुकराःस्वराजानंमधुकररा
जानमुत्क्रामंतंप्रतिसर्वाएवोत्क्रामंतेतस्मिंश्चप्रतिष्ठमानेसर्वाएवप्रातिष्ठंतेप्रतितिष्ठंति॥यथायंदृष्टांतएवंवाङ्मनश्चक्षुःश्रोत्रंचेत्यादयस्तउ
त्सृज्याश्रद्दधानतांबुध्वाप्राणमाहात्म्यंप्रीताःप्राणंस्तुन्वंति॥
पंगः॥संतापयतीत्यर्थः॥आवहप्रवाहादितिआवहादयःसप्तवायुगणाःतथाभूतः
सन्मेघान्ज्योतिश्चक्रादींश्चवहतीतिशेषः॥एषदेवःपृथिवी सन्सर्वस्यजगतोधारयिता॥रयिश्चंद्रःसन् सर्वंपुष्णातीत्यर्थः ॥ १२ ॥ ५ ॥ ५ ॥

 श्रद्धादीति प्राणाकृद्धां खंवायुर्ज्योतिरापइत्यादिनावक्ष्यमाणं षोडशकलात्मकमित्यर्थः॥ब्रह्मचेति॥ ब्राह्मणजातिरित्यर्थः॥ चशब्दार्थमाह॥ यज्ञादीति॥ 
१ अधिकृतं सर्वमेषएवेत्यन्वयः॥किंचेति॥यः प्रजापतिर्विराट्सोपित्वमेवेत्यन्वयः॥पितुर्गर्भेरेतोरूपेणमातुर्गर्भेपुत्ररूपेणयश्चरतिपश्चात्तयोरेवप्रति

कथमेषप्राणोग्निःसंस्तपतिज्वलति तथैषसूर्यःसन्प्रकाशते॥तथैषपर्जन्यःसन्वर्षति॥किंचमघवानिंद्रःसन्प्रजाः पालयतिजिघांसत्य
२ सुररक्षांसि एषवायुरावहप्रवाहादिभेदः किंच एषपृथिवीरयिर्देवः सर्वस्यजगतः सन्मूर्तमसदमूर्तं चामृतंचयद्देवानांस्थितिका
रणं किंबहुना अराइवरथनाभौश्रद्धादिनामांतं सर्वंस्थितिकालेप्राणएवप्रतिष्ठितं तथाऋचोयजूंषिसामानीतित्रिविधामंत्रास्त

अथेतरेसर्वएवोत्क्रामंतेतस्मिंश्चप्रतिष्ठमानेसर्वएवप्रातिष्ठंतेतद्यथामक्षिकामधुकरराजानमुत्क्रामंतंसर्वाएवोत्क्रा
मंतेतस्मिंश्चप्रतिष्ठमानेसर्वाएवप्रातिष्ठंतएवंवाङ्मनश्चक्षुःश्रोत्रंचतेप्रीताःप्राणंस्तुन्वंत्येषोग्निस्तपत्येषसूर्यएषपर्जन्यो
मघवानेषवायुः॥एषपृथिवीरयिर्देवःसदसच्चामृतंचयत्॥अराइवरथनाभौप्राणेसर्वंप्रतिष्ठितं॥ऋचोयजूंषिसामानियज्ञःक्षत्रंब्रह्मच॥प्रजापतिश्चरसिगर्भेत्वमेवप्रतिजायसे॥

त्साध्यश्चयज्ञः॥क्षत्रंसर्वस्यपालयितृ ब्रह्मचयज्ञादिकर्मकर्तृ तेअधिकृतं
चैवएषप्राणःसर्वं॥किंचयःप्रजापतिरपिसत्वमेव गर्भेचरसिपितुर्मातुश्चप्रतिरूपः सन्प्रतिजायसे प्रजापतित्वादेवप्रागेवसिद्धंतवमातृपितृ
त्वं सर्वदेह 
रूपःसन्सदृशःसन्यःप्रजायतेसत्वमेवप्रजायसइत्यन्वयः॥प्रतिशब्दार्थउक्तः प्रतिरूपःसन्निति॥ननुप्राणस्यपुत्ररूपत्वमेवोक्तं 
नतुपितृमातृरूपत्वंतत् कस्मादत आह॥प्रजापतित्वादेवेति॥तस्यसर्वात्मत्वादित्यर्थः॥निष्कृष्टार्थमाह॥सर्वदेहेति॥अत्रापिनिष्कृष्टार्थमाह॥भोक्ता 

अतस्त्वमेवैवेत्यतःशब्दाध्याहारेणयोज्यं॥हविर्षांप्रापयितृतमइति॥वन्हिशब्दोवहनाद्वन्हिरितियौगिकइत्यर्थः॥प्रथमाभवतीति॥यज्ञादिदैवे
कर्मणिप्रथमंनांदीमुखश्राद्धस्यआवश्यककर्तव्यत्वात्प्रथमेत्यर्थः॥ऋषगतावितिधातोःज्ञानार्थत्वातऋषिशब्दस्यज्ञानजनकचक्षुराद्यर्थत्वमित्य

देह्याकृतिरुद्धनाएकःप्राणःसर्वात्मासीत्यर्थः॥तुभ्यंत्वदर्थंयाइमामनुष्याद्याःप्रजाःहेप्राणचक्षुरादिद्वारैर्बलिंहरंति॥यस्त्वंप्राणैश्चक्षुरा
दिभिःसहप्रतितिष्ठसिसर्वशरीरेषतस्तुभ्यंबलिंहरंतीतियुक्तं॥भोक्ताहियतस्त्वंतवैवान्यत्सर्वंभोज्यं॥किंचदेवानामिंद्रादीनामसि
भवसित्वंवन्हितमःहविर्षांप्रापयितृतमः॥पितृणांनांदीमुखश्राद्धेयापितृभ्योदीयतेस्वधाअन्नंसादेवप्रधानमपेक्ष्यप्रथमाभवतित

तुभ्यंप्राणप्रजास्त्विमाबलिंहरंतियःप्राणैःप्रतितिष्ठसि॥देवानामसिवन्हितमःपितृणांप्रथमास्वधा॥ऋषीणांचरितंसत्य
मथर्वांगिरसामसि॥इंद्रस्त्वंप्राणतेजसारुद्रोसिपरिरक्षिता॥त्वमंतरिक्षेचरसिसूर्यस्त्वंज्योतिषांपतिः॥यदात्वमभिवर्षस्य
थेमाःप्राणतेप्रजाः॥आनंदरूपास्तिष्ठंतिकामायान्नंभविष्यतीति॥व्रात्यस्त्वंप्राणैकऋषिरत्ताविश्वस्यसत्पतिः॥

स्यापिपितृभ्यःप्रा
पयितात्वमेवेत्यर्थः॥किंचऋषीणांचक्षुरादीनांप्राणानामंगिरसामंगिरसभूतानामथर्वणांतेषामेवप्राणोवाअथर्वाइतिश्रुतेः॥चरितंचे
ष्टितं॥सत्यमवितथंदेहधारणाद्युपकारलक्षणंत्वमेवासि॥किंचइंद्रःपरमेश्वरस्त्वं॥हेप्राणतेजसावीर्येणरूद्रोसिसंहरन्॥जगत्स्थि
तौचपरिसमंताद्रक्षितापालयितापरिरक्षितात्वमेवजगतःसौम्येनरूपेण॥
र्थः॥अंगिरसभूतानामितिप्राणाभावेअंगानांशोषदर्शनात्तेषामंगि
रसत्वमित्यर्थः॥मुख्यप्राणस्याथर्वत्वंश्रुत्याभिहितंयद्यपितथापिचक्षुरादीनामपितदंशत्वादथर्वशब्दार्थत्वमितिभावः॥इहइंद्रशब्देनपरमेश्वरत्वम्
यतेमघवानित्यनेनतुइंद्रउक्तइतिभेदमाह॥इंद्रःपर
मेश्वरइति॥

ब्रात्यः संस्कारहीनः स्यादित्यमरः १



वीर्येणसंहारसामर्थ्येनेत्यर्थः॥सौम्येनेतिविष्ण्वादिरूपेणेत्यर्थः॥असंस्कृतइतिसंस्काररहीनोव्रात्यइतिस्मृतेरित्यर्थः॥अनेनस्वतःशुद्धत्वंविवक्षितमि त्याह॥स्वभावतएवेति॥मातरिश्वेति॥मातरिश्वनइत्यत्रनलोपःछांदसइत्यर्थः॥वायोस्त्वमितिपितेत्यनुषंगः॥अस्मिन्व्याख्यानेवायुमात्रपितृत्वाद



त्वमंतरिक्षेऽजस्रंचरसि॥उदयास्तमयाभ्यांसूर्यस्त्वमेवचसर्वेषांज्योतिषांपतिः॥यदापर्जन्योभूत्वाभिवर्षसित्वंअथतदाऽन्नंप्राप्येमाःप्र जाःप्राणतेप्राणचेष्टांकुर्वंतीत्यर्थः॥अथवाप्राणतेतवेमाःप्रजाःस्वात्मभूतास्त्वदन्नसंवर्द्धितास्त्वदभिवर्षणदर्शनमात्रेणचानंदरूपाःसु खंप्राप्ताइवसत्यस्तिष्ठंतिकामायेच्छातोऽन्नंभविष्यतीत्येवमभिप्रायः॥किंचप्रथमजत्वादन्यस्यसंस्कर्तुरभावादसंस्कृतोव्रात्यस्त्वंस्वभाव तएवशुद्धइत्यभिप्रायः॥हेप्राणएकऋषिस्त्वमाथर्वणानांप्रसिद्धएकर्षिनामाग्निःसन्नत्तासर्वहविषांत्वमेवविश्वस्यसर्वस्यसतोवि

वयमाद्यस्यदातारःपितात्वंमातरिश्वनः॥यातेतनूर्वाचिप्रतिष्ठितायाश्रोत्रेयाचचक्षुषि॥याचमनसिसंतताशि वांतांकुरुमोत्क्रमीः॥

द्यमानस्यपतिःसाधुर्वापतिःसत्पतिः॥वयंपुनरद्यस्यतवादनीयस्यहविषोदातारस्त्वंपितामातरिश्वहे मातरिश्वनूअः अकारोब्रह्मविष्णुश्चेत्यर्थान्तरंनोऽस्माकं॥अथवामातरिश्वनोवायोःपितात्वमतश्चसर्वस्यैवजगतःपितृत्वंसिद्धं॥किं बहुनायातेत्वदीयातनूःवाचिवक्तृत्वेनप्रतिष्ठितावदनचेष्टांकुर्वंतीयाश्रोत्रेयाचचक्षुषियाचमनसिसंकल्पादिव्यापारेणसंततासमनुग तातनूस्तांशिवांशांतांकुरुमोत्क्रमीरुत्क्रमणेनाशिवांमाकार्षीरित्यर्थः॥

स्वदादिसर्वपितृत्वमनुक्तंस्यादत आह॥अतश्चेति॥अस्मदादिसर्व जनकत्वाद्वायोस्तज्जनकस्याकाशात्मनःप्राणस्यसर्वजनकत्वंसिद्धमित्यर्थः॥वाचिप्रतिष्ठितेति॥वाचिअपानरूपातनूःप्रतिष्ठिता॥श्रोत्रेव्यानरूपा॥

सप्राणस्तच्चक्षुः सव्यानस्तच्छ्रोत्रं सोऽपानः सा वाक् स समानस्तन्मन इति श्रुतेरित्यर्थः॥ उत्क्रमणेनेति॥ प्राणोत्क्रमणे सति अपानाद्यात्मिकावागादिरूपा
नूः अशिवाकार्यायोग्या स्यादित्यर्थः॥ ब्राह्म्य इति॥ ऋगादिमंत्ररूपा ब्राह्म्यः श्रियः ऋचः सामानि यजूंषि सा हि श्रीरमृता सतामिति श्रुतेः॥ क्षात्र्यः प्रसि
द्धाः धनाद्यैश्वर्यरूपाः॥ अस्मिन् प्रश्ने निर्धारितं गुणं संगृह्याह॥ इत्येवमिति॥ इदं वरिष्ठत्वादेरुपलक्षणं॥ ॥इति प्रश्नोपनिषद्भाष्यविवरणे द्वितीयः प्र

किं बहुना अस्मिंल्लोके प्राणस्यैव वशे सर्वमिदं यत्किंचिदुपभोगजातं॥ त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि
प्राण एव ईशिताः तो मातेव पुत्रान् अस्मान् रक्षस्व पालयस्व॥ त्वन्निमित्ता हि ब्राह्म्यः क्षात्रियाः श्रियस्तास्त्वं श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां
विधेहि नो विधत्स्वेत्यर्थः॥ इत्येवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्तेत्यवधृतं॥ इति प्रश्नोपनिषद्भाष्ये

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितं॥ मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ २॥

द्वितीयः प्रश्नः॥ २॥ ॐ॥ अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ॥ प्राणैरेवं निर्धारितत्वैरुपलब्धमहिमापि संहतत्वात्त्वादस्य कार्यत्वम
तः पृच्छामि भगवन् कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते जातश्च कथं केन वृत्तिविशेषेणायात्यस्मिन् शरीरे किं निमित्तमस्य शरीरग्र
हणमित्यर्थः॥ २॥

श्नः समाप्तः॥ २॥ एवं प्रजापतित्वात्तृत्वादिगुणजातं निर्धार्य प्राणस्य उत्पत्त्यादिकं निर्धारयन् तदुपासनाविधानं प्रश्नांतरमवतार
यति॥ अथेति॥ वैदर्भिप्रश्नानंतरमित्यर्थः॥ प्राणैरिति येर्वागादिप्राणैराकाशादिभिश्च प्राणस्य तत्त्वमुपलब्धं तैरित्यर्थः॥ प्राणस्य पूर्वोक्तमहिमत्वादेवो
त्पत्तिशंकाऽभावात् कुत इति प्रश्नानुपपत्तिमाशंक्याह॥ अपि संहतत्वादिति॥ अनेकात्मकत्वात् सावयवत्वादित्यर्थः॥ शरीरग्रहणमिति॥ शरीरप्रवेश इत्यर्थः

प्र·उ· प्रातिष्ठत इति॥आङ्‌ प्रश्लेषाद्दीर्घत्वं॥विषमेति॥विषमं दुर्घटं यथा तथा प्रश्नार्हं इत्यर्थः॥अति प्रश्नानिति॥त्वदन्येषां प्रश्नानतिक्रांतान् अन्यदीयप्रश्नागोच टी·
११ रान् सूक्ष्मप्रश्नान् प्रष्टव्यार्थानित्यर्थः॥अतिशयेनेति॥अपरब्रह्मापेक्षया अतिशयितश्चत्वं ब्रह्मविदसि त्वमिति प्रोत्साहार्थं स्तौतीति भावः॥दिव्यो ह्यमू

प्रविष्टश्च शरीरे आत्मानं वा प्रविभज्य प्रविभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति ३ केन वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते ४ कथं बाह्यमधिभूतमधिदैवतं चाभिधत्ते ५ धारयति कथमध्यात्ममिति॥ ६॥ एवं पृष्टस्तस्मै स होवाचाचार्यः॥ प्राण एव तावत् दुर्विज्ञेयत्वाद्विषमप्रश्नार्हस्तस्यापि जन्मादित्वं पृच्छसि अतो अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोसीत्यतिशयेन त्वं ब्रह्मविदतस्तुष्टोहं तस्मात्ते तुभ्यं ब्रवीमि यत्पृष्टं शृणु॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ भगवन् कुत एष प्राणो जायते कथमायात्यस्मिन् शरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति॥ तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोसीति तस्मात्तेहं ब्रवीम्यात्मन एष प्राणो जायते यथैषा पुरुषे छायैतस्मिन्नेतदाततं॥

आत्मनः परस्मात्पुरुषादक्षरात्सत्यादेष उक्तः प्राणो जायते॥ कथमित्यत्र दृष्टांतः॥ यथा लोके पुरुषे शिरःपाण्यादिलक्षणे निमित्ते छाया नैमित्तिकी जायते तद्वदेतस्मिन्ब्रह्मण्येतत्प्राणाख्यं छायास्थानीयमनृतरूपं तत्त्वं सत्ये पुरुषे आततं समर्पितमित्येतत् छायेव देहे॥ १॥ मनोकृतेन मनःसंकल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतत् वक्ष्यति हि॥ पुण्येन पुण्यमित्यादि तदेव सक्तः

तः पुरुषः अक्षरात्परतः परः॥ एतस्माज्जायते प्राण इति मंत्रो अत्र संवादयितुं तद्गतविशेषणान्याह॥ परस्मादिति॥ अत्र दृष्टांत इति॥
तस्मान्न तत्त्वार्थं दृष्टांत उच्यत इत्यर्थः॥ छायेति॥ प्रतिबिंबादिरूपेत्यर्थः॥ एतस्मिन्निति॥ प्रकृते जनके आत्मनि ब्रह्मणीत्यर्थः॥ कथमायातीत्यस्योत्तरमाह॥ मनो

कृतेनेति मंत्रांशः॥ तदेव सक्त इति॥

एषा

रामः
११

अस्यकर्मिणोमनोयस्मिन् फलेनिषक्तंससक्तः॥आसक्तःसन् तदेव फलंकर्मणासहएतीति श्रुतौचशरीरग्रहणंकर्मसाध्यमुक्तमित्यर्थः॥आत्मानंवाप्र
विभज्येत्यस्यउत्तरंदृष्टांतेनाह॥ यथेति॥इतरानिति॥ इतरान् चक्षुरादीन् यथास्थानंअक्ष्यादिगोलकादिस्थानेसन्निधत्तेसन्निधापयति॥आत्मभेदान्
मुख्यप्राणस्यवृत्तिभेदान् प्राणापानादीन् पाय्वादिषुनियुङ्क्ते इतिद्रष्टव्यं॥अत्रश्रुत्यानेत्रादीनांचक्षुरादिस्थानानांस्पष्टत्वात्तानिनोक्तानीतिद्रष्टव्यं॥यःकुर्वं

सहकर्मणेतिचश्रुत्यंतरात्॥आयात्यागच्छत्यस्मिन्शरीरे२ यथायेनप्रकारेणलोकेराजासम्राडेवग्रामाद्यधिकृतान्विनियुंक्ते॥कथमेतान्
ग्रामानेतान्ग्रामानधितिष्ठस्वेत्येवमेवयथादृष्टांतःएषमुख्यःप्राणइतरान् प्राणान् चक्षुरादीनात्मभेदांश्चपृथक्पृथगेवयथास्थानंस
न्निधत्तेविनियुंक्ते॥तत्रविभागःपायूपस्थेपायुश्चोपस्थश्चपायूपस्थंतस्मिन्नपानमात्मभेदंमूत्रपुरीषाद्यपनयनंकुर्वंस्तिष्ठतिसन्निधत्ते॥त

मनोकृतेनायात्यस्मिन्छरीरे यथासम्राडेवाधिकृतान्विनियुंक्तएतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैषप्राणइतरान्
प्राणान्पृथक्पृथगेवसन्निधत्ते॥पायूपस्थेपानंचक्षुःश्रोत्रेमुखनासिकाभ्यांप्राणःस्वयंप्रातिष्ठतेमध्येतुसमानएषह्येत
द्धुतमन्नंसमंनयति॥

याचक्षुःश्रोत्रे॥ तथाचक्षुश्चश्रोत्रंचतस्मिंश्चक्षुःश्रोत्रेमुखनासिकाभ्यांचमुखंचनासिकाचताभ्यांमुखनासिका
भ्यांचनिर्गच्छन्प्राणःस्वयंसम्राट्स्थानीयःप्रातिष्ठतेप्रतितिष्ठति॥मध्येतुप्राणापानयोस्थानयोर्नाभ्यांसमानअशितंपीतंचसमंनय
तीतिसमानः॥एषहियस्माद्यदेतद्धुतंभुक्तंपीतंचात्माग्नौप्रक्षिप्तमन्नंसमंनयति॥ स्तिष्ठतितंसन्निधत्तेविनियुङ्क्ते इत्यर्थः॥मध्येति॥प्राणापान
यो मध्येयाना भिस्तस्यांसमानःप्रतितिष्ठतीत्यन्वयः॥समानशब्दार्थउक्तंश्रुत्यारूढंकरोति॥एषहीति॥आत्माग्नाविति॥आत्मनिशरीरेअग्निर्जाठरा

प्र॰३ एवंहुतपदवलादन्नस्यहविष्ट्वंजाठराग्नेराहवनीयत्वंप्रक्षेपस्यहोमत्वंचोत्का॥शीर्षण्यसप्तद्वाराभ्निर्गतानांज्ञानानांअर्चिष्ट्वंवक्तुंतस्मादेताइतिवाक्यं
१२ न्याचष्टे॥तस्मादिति॥प्राप्तादिति॥अग्नेरौदर्याद्धेतोःप्राप्तपरिपाकादन्नरसादन्नंनाडीद्वारादेहंव्याप्तुंनाडीस्थानंहृदयंप्राप्तादन्नरसादितिशेषः॥द
र्शनद्वयंश्रवणद्वयंघ्राणद्वयंमुखंचैकंरसनामितिसप्तार्चिषः॥जाठराग्निपाकजन्यान्नरसबलेनदर्शनादीनांप्रवृत्तेस्तेषुतदर्चिष्ट्वारोपइत्यर्थः॥स्थान
स्यनाडीरूपंस्थानंदर्शयितुंनाडीनामुत्पत्तिस्थानंवक्तुमाह॥हृदीत्यादिना॥हृदयस्य लिंगात्मस्थानत्वोक्तेःप्रयोजनंतुकेचियोगिनःनाभिकंदस्यनाड्यु

तस्मादशितपीतेंधनादग्नेरौदर्यात्हृदयदेशंप्राप्तादेताःसप्तसंख्याकाअर्चिषोदीप्तयोनिर्गच्छंत्योभवंतिशीर्षण्यःप्राणद्वारादर्शनश्र
वणादिलक्षणरूपादिविषयप्रकाशाइत्यभिप्रायः॥हृदिह्येषपुंडरीकाकारमांसपिंडपरिछिन्नेहृदयाकाशेएषआत्मात्मनासंयुक्तोलिं

त्रै तस्मादेताःसप्तार्चिषोभवंतिहृदिह्येषआत्माअत्रैतदेकशतंनाडीनांतासांशतंशतमेकैकस्यांद्वासप्ततिर्द्वासप्ततिःप्रतिशा
खानाडीसहस्राणिभवंति॥ गात्मा॥अत्रास्मिन्हृदयेएकशतंएकोत्तरशतंसंख्ययाप्रधाननाडीनांभवतीतितासांशतंशतमेकैक
स्यांनाड्याभेदाः

प्रधान त्पत्तिस्थानंवदंतितन्निराकरणं॥तत्रैवलिंगात्मनःसंचरणार्थानाड्यःनाडीभिःप्रत्यवसृप्येत्यादिश्रुतेः॥ततश्चलिंगात्मनोहृदय
स्थानत्वेतत्संचारमार्गभूतनाडीनामपितदेवोत्पत्तिस्थानंअन्यथाप्रदेशांतरस्थनाडीनांतन्मार्गत्वायोगात्द्वासप्ततिःसहस्राणिहृदयात्पुरीततमभिप्र
तिष्ठंतइतिश्रुतेश्चेतिलिंगशरीरस्यात्मत्वंआत्मोपाधित्वेनतद्योगादित्याह॥आत्मनासंयुक्तइति॥यस्माल्लिंगात्माहृदिवर्त्ततेतस्मात्तत्संचारमार्गभूतनाडी
नामपितदेवस्थानमित्याह॥अत्रेति॥नाडीनांशरीरविधारकत्वेनप्रसिद्धत्वंवक्तुमेतदितिविशेषणंतस्यस्पष्टत्वाद्व्याख्येनव्याख्यातं॥एकैकस्यानाड्याःशाखा

५ ऐकोत्तरशतंसंख्यायासांप्रधाननाडीनांभवति

टी॰ ॥नाड्याःशतंशतमेकैकस्यांद्वासप्तति॥
रामः
१२

ततश्च शतोत्तरमयुतं शाखानाड्य इत्यर्थः॥ शाखानाडीनां च प्रत्येकं द्व्यधिकसप्ततिसहस्राणि प्रतिशाखानाड्यः संतीत्याह॥ पुनरपीति॥ सप्तति
रिति पदस्य संख्याप्रधानत्वे सहस्राणीत्यस्य तेन सामानाधिकरण्यायोगात्सप्तत्यंततया व्याचष्टे॥ सहस्राणामिति॥ प्रतिशाखेति॥ प्रतिशाखाभ्यो निर्ग
ताः अन्यशाखाः प्रतिशाखाः द्वासप्ततिरित्यत्र वीप्सार्थमाह॥ प्रतिप्रतीति॥ प्रतिनाडीशतमित्यनंतरमेकैकस्या इत्यनुषंगः तथा च प्रतिप्रतिनाडीशत
मेकैकस्याः नाड्याः प्रतिशाखानाडीनां द्वासप्ततिः सहस्राणि भवंतीत्यर्थः॥ तथा च मूलशाखाप्रतिशाखानाड्यो मिलित्वा द्वासप्ततिकोटयो द्वासप्ततिलक्षा

पुनरपि द्वासप्ततिर्द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि सहस्राणां द्वासप्ततिः प्रतिशाखानाडीनां सहस्राणि प्रतिप्रतिशाखं नाडीनां सहस्रा
णि नाडीसंख्यया प्रधाननाडीनां सहस्राणि भवंति॥ आसु नाडीषु व्यानो वायुश्चरति व्यानो व्यापनादादित्यादिव रश्मयो हृदयात्सर्वतोगामि

आसु व्यानश्चरत्यथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकं॥

नीभिर्नाडीभिः सर्वदेहं संव्याप्य व्यानो वर्तते संधिस्कंधमर्मदेशेषु च विशेषेण प्राणापानवृत्त्योश्च मध्ये उद्भूतवृत्तिः वीर्यवत्कर्मकर्त्ता भवति॥

णि दशसहस्रं च शतद्वयमेका च भवंतीति द्रष्टव्यं॥ एवं नाडीरुक्त्वा व्यानस्य तत्स्थानतामाह॥ आस्विति॥ सूक्ष्मासु नाडीषु विद्यमानस्य व्यानस्य कथं व्याप
कत्वमित्याशंक्य नाडीनां सर्वदेहव्याप्तेस्तत्स्थस्यापि व्यानस्य तद्द्वारा व्याप्तिरित्याह॥ आदित्यादिवेति॥ यथा आदित्यान्निर्गत्य रश्मयः सर्वतोगताः तथा हृदया
त्सर्वतोगामिन्यो नाड्यस्ताभिरिति योज्यं॥ सामान्येन सर्वशरीरव्याप्तावपि विशेषस्थानमाह॥ संधीति॥ प्राणेति॥ उच्छ्वासनिःश्वासयोः प्राणापानवृत्त्योरभा
वे व्यानवृत्तिरुद्भवतीत्यर्थः॥ वीर्यवदिति॥ अथ यः प्राणापानयोः संधिः स व्यान इत्युक्त्वा यानि वीर्यवंति कर्माणि बलवता पुरुषेण साध्यानि धनुरायमनादीनि ता

प्र॰उ॰ न्यप्राणन्ननपानंकरोतीतिश्रुत्यंतरोक्तेरित्यर्थः॥इदानीमुदानस्यस्थानंवदनकेनोत्क्रमतइत्यस्योत्तरमाह॥यात्विति॥समप्रधानाभ्यामिति॥अने टी॰
१३ नपुण्याधिक्येदेवलोकंपापाधिक्येनरकलोकंनयतीतिपूर्वंव्याख्यातंभवति॥कथंबाह्यमभिधत्तेकथमध्यात्ममित्यस्योत्तरमाह॥आदित्यइति॥यादे
वताप्रसिद्धेति॥अग्निदेवतापृथिव्येवयस्यायतनंअग्निर्लोकइतिश्रुतेरग्निसंबन्धावगमादित्यर्थः॥अवष्टभ्येत्यनंतरंअध्याहारेणवाक्यंपूरयति॥अथ

अथयातुतत्रैकशतानांनाडीनांमध्येऊर्ध्वगासुषुम्नाख्यानाडीतयैकयोर्ध्वःसन्नुदानोवायुरापादतलमस्तकवृत्तिःसंचरन्पुण्येनकर्मणाशा
स्त्रविहितेनपुण्यंलोकंदेवादिस्थानलक्षणंनयतिप्रापयति॥पापेनतद्विपरीतेननरकंतिर्यग्योन्यादिलक्षणं॥उभाभ्यांसमप्रधानाभ्यांपु

आदित्योहवैबाह्यःप्राणउदयत्येषह्येनंचाक्षुषंप्राणमनुगृह्णानःपृथिव्यांयादेवतासैषापुरुषस्यापानमवष्टभ्यांतरायदाकाशः
ससमानो

ण्यपापाभ्यामेवमनुष्यलोकंनयतीत्यनुवर्तते॥आदित्योहवैप्रसिद्धोह्यधिदेवतंबाह्यःप्राणःसएषउदयन्नुद्गच्छतिएष
ह्येनमध्यात्मिकंचक्षुषिभवंचाक्षुषंप्राणंप्रकाशेनानुगृह्णानोरूपोपलब्धौचक्षुषःआलोकंकुर्वन्नित्यर्थः॥तथापृथिव्यामभिमानिनीया
देवताप्रसिद्धासैषापुरुषस्यापानमपानवृत्तिमवष्टभ्यआकृष्यवशीकृत्यअधएवाकर्षणेनानुग्रहंकुर्वतीवर्ततइत्यर्थः॥अन्यथाहिश
रीरंगुरुत्वात्पतेत्सावकाशेवाउद्गच्छेत्यदेतत्अंतरामध्येद्यावापृथिव्यो एवापकर्षणेति॥नन्वर्थस्तंभादेरूर्ध्वमुखेननिखातस्यपरितोविद्य
मानरज्जुभिरधएवाकर्षणेनपतनाभाववत्अधएवाकर्षणेनशरीरस्यपतनाभावःसिध्यतीत्यर्थः॥अनुग्रहमिति॥शरीरधारणलक्षणमित्यर्थः॥अन्य रामः
थेति॥पृथिवीदेवतायाविधारणाकरणेगुरुत्वादपानेनअधआकर्षणाच्चसावकाशेभूम्यादिपतनप्रतिबंधकाभावस्थलेपतेदित्यर्थः॥अंतरायदाकाशइति १३

मंचाःक्रोशंतीतिवत् ६
यदितिक्लीबत्वंछांदसमित्याह॥यआकाशइति॥मंचस्थवदितिमंचाः क्रोशंतीत्यत्रमंचशब्देनमंचस्थोयथालक्ष्यतेतथाआकाशशब्देनतत्स्थोवायुर्ल
क्ष्यतइत्यर्थः॥ससमानइति॥सामानाधिकरण्यमनुग्राह्यानुग्राहकयोरभेदोपचारादित्याह॥समानमनुगृह्णानइति॥एवमुत्तरत्रापिअनुग्रहेहेतु
माह॥समानस्येति॥शरीरांतराकाशस्थत्वंसमानस्यद्यावापृथिव्यंतराकाशस्थत्वंबाह्यवायोरिति अंतराकाशस्थत्वंतयोस्तुल्यमित्यर्थः॥वायुर्व्यान
इत्यत्रतुअंतराकाशस्थत्वविशेषरहितंवायुसामान्येनसमुच्चीयतइतिनपूर्वाभेदइत्याह॥सामान्येनेति॥तेजोहवाइतिवाक्यंव्याचष्टे ॥ यद्वाह्य
मिति॥पूर्वमादित्यात्मकंविशेषतेजउक्तंअत्रतेजःसामान्यमुच्यतइतिनपौनरुक्त्यमित्याह॥सामान्यंतेजइति॥एवमादित्यादिनारूपेणमुख्यप्राण

यआकाशस्तत्स्थोवायुराकाशउच्यते मंचस्थवत्ससमानः समानमनुगृह्णानोवर्ततइत्यर्थः॥समानस्यांतराकाशस्थत्वसामान्यात्सामान्ये

वायुर्व्यानस्तेजोहवाउदानः

नचयोबाह्योवायुःसव्याप्तिसामान्याद्व्यानः व्यानमनुगृह्णानोवर्ततइत्यभिप्रायः॥यद्वाह्यंहवैप्रसिद्धंसामान्यंतेजस्तच्छरीरेउदानउ
दानंवायुंअनुगृह्णातिस्वेनप्रकाशेनेत्यभिप्रायः॥

एषप्राणापानसमानोदानव्यानानुग्राहकत्वोक्त्याअध्यात्मंप्राणादिवृत्त्यनुग्राहकत्वमुक्तं॥
आदित्याग्न्याकाशसामान्यवायुःतेजोरूपीसनबाह्यमधिदैवमादित्यादिकंधारयतीत्युक्तं तद्रूपेणावस्थानमेवतद्धारणंप्राणापानाद्यनुग्रहे
णचक्षुराद्यनुग्रहोक्तेःतद्द्वारातद्ग्राह्याधिभूतविधारकत्वमुक्तंसप्राणस्तच्चक्षुःसोपानःसावाक्सव्यानस्तच्छ्रोत्रंससमानस्तन्मनःसउदानःसवा
युरितिश्रुत्यंतरेचक्षुरादीनांप्राणाद्यात्मतोक्तेश्चक्षुराद्यनुग्राहकत्वोक्त्याचक्षुरादिरूपाध्यात्मविधारकत्वंचोक्तमिति॥कथंबाह्यमभिधत्तेकथंमध्या
त्ममित्यस्योत्तरमुक्तमितिद्रष्टव्यं॥

तेजसउदानवाय्वनुग्राहकत्वंव्यतिरेकप्रदर्शनेनसाधयति॥यस्मादिति॥यस्मात्तेजस्वभावउत्क्रांतिकृद्रूपउदानवायुर्बाह्यतेजोनुगृहीतःसन्नेवशरी
रेवर्ततेतस्माज्जीवनहेतुकर्मोपरमेबाह्यतेजोनुग्रहाभावेनउपशांततेजामुमूर्षुर्भवतीत्यन्वयः स्वाभाविकमितिजाठराग्निकृतंहस्तादिनास्वशरीरस्पर्शे
सत्युष्णत्वेनोपलभ्यमानंतेजइत्यर्थः॥भवत्युत्पद्यतइतिभवः शरीरमित्यर्थः॥शरीरांतरप्रतिपत्तिरात्मनोःक्रियस्यनसंभवतीतिशंकते॥कथमिति॥इं
द्रियोपाधिवशादित्याह॥सहेति॥मनसिसंपद्यमानैरिंद्रियैः सहशरीरांतरंप्रतिपद्यतइतिपूर्वेणान्वयः॥उक्तशरीरांतरप्राप्तिमेवउत्क्रांतिक्रमप्रदर्शनेन

यस्मात्तेजःस्वभावोबाह्यतेजोनुगृहीतउत्क्रांतिकर्तातस्माद्यदालौकिकःपुरुषःउपशांततेजाभवतिउपशांतंस्वाभाविकंतेजोयस्यसतदातंक्षी
णायुषंमुमूर्षुंविद्यात्सपुनर्भवंशरीरांतरंप्रतिपद्यते॥कथं॥सहेंद्रियैर्मनसिसंपद्यमानैःप्रविशद्भिर्वागादिभिर्मरणकालेयच्चित्तोभवतितेनैव

तस्मादुपशांततेजाःपुनर्भवमिंद्रियैर्मनसिसंपद्यमानैर्यच्चित्तस्तेनैषप्राणमायाति

चित्तेनसंकल्पेनेंद्रियैःसहप्राणंमुख्यप्राणवृत्तिमायातिमरणकालेक्षीणेंद्रियवृत्तिःसन्मुख्ययाप्राणवृत्त्यैवावतिष्ठतइत्यर्थः॥तदाभिवदंति
ज्ञातयउच्छ्वसितिजीवतीतिसचप्राणस्तेजसोदानवृत्त्यायुक्तःसन्सहात्मनास्वामिनाभोक्त्रासएवउदानवृत्त्यैवयुक्तःप्राणस्तंभोक्तारंपुण्यपाप
कर्मवशात्यथासंकल्पितंयथाभिप्रेतंलोकंनयतिप्रापयति॥ सयथाकर्त्रुंयच्चित्तइत्यादिवाक्यंतदपेक्षिताध्याहारंकुर्वन्व्याचष्टे॥मरणेति॥यच्चित्तइ
तिपदेवदेवतिर्यगादिशरीरंसम्यगितिचित्तेयस्यसयच्चित्तइत्यर्थः॥प्राणंप्रत्यागमनंलौकिकव्यवहारेणप्रथयति॥तदेति॥तेजसातेजोनुगृहीतयाउदान
वृत्त्येत्यर्थः॥एवंभूतःभोक्ताउदानसंयुक्तःप्राणःकंनयतीत्यपेक्षायांतमेवभोक्तारंनयतीतिवदन्वाक्यार्थमाह॥सएवमिति॥एवकारस्यतमेवेत्यन्वयः॥य

कर्मज्ञानादिसाधनानुष्ठानदशायां संकल्पितं मरणकाले वासनारूपेण पुनरभिव्यक्तं लोकं देवादिशरीरमित्यर्थः ॥ एवं प्राणस्वरूपं निर्धार्य तदुपासनं वि
धत्ते ॥ यः कश्चिदिति ॥ उत्पत्त्यादिभिर्यथोक्तविशेषणैर्विशिष्टं ॥ आत्मनः प्राणो जायते मनःकृताभ्यां धर्माधर्माभ्यां शरीरं गृह्णाति आत्मानं च पंचधा विभज्य
पायूपस्थयोरपानं स्वस्वरूपं प्राणं चक्षुःश्रोत्रयोर्नाभौ समानं नाडीसमूहे व्यानं उदानं च सुषुम्नायां स्थापयति उदानेनोत्क्रामति बाह्यैः प्राणापानव्यानस
मानोदानानुग्राहकैरादित्यपृथिवीदेवताकाशवायुतेजोरूपैरधिदैवमादित्यादिकं आदित्यादिकृतानुग्रहैरध्यात्मं चक्षुर्वाक्श्रोत्रमनस्त्वक्चक्षुरादि

यः कश्चिदेवं विद्वान्यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभिः प्राणं वेद जानाति ॥ तस्येदं फलमैहिकमामुष्मिकं चोच्यते ॥ न हास्य नैवास्य विदु
षः प्रजाः पुत्रपौत्रादिलक्षणा हीयते छिद्यते पतिते च शरीरे प्राणसायुज्यतयाऽमृतोऽमरणधर्मा भवति तदेतस्मिन्नर्थे संक्षेपाभिधायक ए

प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति य एवं विद्वान्प्राणं वेद ॥ न हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लो
कः ॥ उत्पत्तिमायतिं स्थानं विभुत्वं चैव पंचधा ॥ अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ ३ ॥ एष मंत्रः श्लोको भव

ति ॥ उत्पत्तिं परमात्मनः प्राणस्यायतिमागमनं मनोकृतेनास्मिन्शरीरे स्थानं स्थितिं पायूपस्थादिस्थानेषु विभुत्वं स्वाम्यं सम्राडिव प्राणवृत्तिभे
दानां पंचधा स्थापनं बाह्यमादित्यादिरूपेणाध्यात्मं चैव चक्षुराद्याकारेणावस्थानं विज्ञायैवं प्राणममृतमश्नुत इति द्विर्वचनं प्रश्नार्थपरिसमाप्त्यर्थं
॥ इति प्रश्नोपनिषद्भाष्ये तृतीयः प्रश्नः ॥ ३ ॥

ग्राह्यमधिभूतं च धारयति ॥ स एवोदानवृत्त्या भोक्तारं च युक्तो भोक्तारं लोकान्तरं नयति स एव च वरिष्ठः प्रजाप
तिरत्ता चेत्येवं प्राणं वेदेत्यर्थः ॥ ऐहिकफलमुक्त्वा आमुष्मिकमाह ॥ पतित इति ॥ अमृतत्वं चनात्रमुख्यं किंतु प्राणसायुज्यमेवेत्याह ॥ प्राणेति ॥ इदं तु कामिनः ॥

निष्कामस्यतुचित्तैकाग्र्यंतकुद्दिहारामुख्यमेवामृतत्वंभवतीतिद्रष्टव्यं॥आयतिमितिआयातिमित्यर्थः हृस्वत्वंछांदसं॥ ॥इतिप्रश्नोपनिषद्भाष्यविवर
णेतृतीयःप्रश्नः॥३॥एवंकर्मविद्यागतिश्रवणेनविरक्तस्यप्राणविद्ययाचित्तैकाग्र्यतकुद्धिमतःअतएवसाधनचतुष्टयवतोमुख्याधिकारिणःपर
विद्योत्पत्त्यर्थंप्रश्नत्रयमारभते॥अथहैनमिति॥पूर्वविद्ययैवामृतत्वोक्तेरुत्तरप्रश्नारंभोव्यर्थइत्यतआह॥प्रश्नत्रयेणेति॥संसारमिति॥अतोनतन्मु
ख्यंअमृतत्वमित्यर्थः॥तस्यसंसारत्वेव्याकृतत्वंहेतुमाह॥व्याकृतविषयमिति॥व्याकृताश्रयंतदंतर्गतमित्यर्थः॥साध्यसाधनलक्षणमिति॥साध्यसा
धनसंबंधेनलक्ष्यतेअभिव्यज्यतेउत्पद्यतइतितथा॥यद्वाअपरब्रह्मणः॥प्राणस्यसाध्यसाधनोभयात्मकत्वाद्धातथातस्मादनित्यमित्यतोपिसंसारत्व

ॐ अथहैनंसौर्यायणीगार्ग्यःपप्रच्छ॥प्रश्नत्रयेणापरविद्यागोचरंसर्वंपरिसमाप्यसंसारंव्याकृतविषयंसाध्यसाधनलक्षणमनित्यं॥अ

अथहैनंसौर्यायणीगार्ग्यःपप्रच्छ॥

थेदानीमसाध्यसाधनलक्षणमप्राणममनोगोचरमतींद्रियविषयंशिवंशांतमविकृतमक्षरंसत्यंपरविद्यागम्यंपुरुषाख्यं मित्यर्थः॥वक्ष्य
माणआत्मातुनतथेत्याह॥असाध्येत्यादिना॥अतींद्रियविषयमिति॥इंद्रियविषयत्वमतिक्रांतमिति॥अव्याकृतमकार्यमित्यर्थः॥तत्रहेतुः॥अप्राण
मिति॥प्राणागोचरत्वेनतदात्मककर्मेंद्रियागोचरत्वंमनोऽगोचरत्वेनज्ञानेंद्रियागोचरत्वमुक्तंसुखरूपतामाह॥शिवमिति॥निवृत्तानर्थत्वमाह॥शांत
मिति॥तत्रभावविकाररहितत्वंहेतुमाह॥अविकृतमिति॥अनेनउत्पत्तिपरिणामवृद्धयोनिषिद्धाःअक्षरमिति॥अपक्षयविनाशौनिषिद्धौउत्पत्तिनि
षेधेनतदनंतरभाव्यस्तित्वंनिषिद्धं॥अत्रसर्वत्रहेतुः॥सत्यमिति॥कालत्रयेप्येकरूपमित्यर्थः॥तत्रअथपरायायातदक्षरमधिगम्यतइत्यादिवाक्यंमा

दिव्योह्यमूर्त्तः पुरुषइति मंत्रमप्याह॥पुरुषाख्यमिति॥कथंपुरुषशब्दोदितंपूर्णत्वंबाह्याभ्यंतरवस्तुभेदादत आह॥सबाह्येति॥सएवबाह्याभ्यंतरा
त्मकः तद्व्यतिरेकेणतदुभयंनास्तीत्यर्थः॥प्रश्नत्रयमिति॥यद्यपिपंचमः प्रश्नोऽपरविद्याविषयएवप्रणवोपासनविषयत्वात् तथापितस्यक्रममुक्तिफ
लत्वेननिर्विशेषात्मन्येवसविशेषब्रह्मप्राप्तिद्वारापर्यवसानात् सोपिपरविषयएवेतिभावः॥एवंसामान्येनप्रश्नत्रयस्यापिसंबंधमुक्त्वाचतुर्थप्रश्नस्यप्राति
स्विकसंबंधमाह॥तत्रेति॥यस्मादित्यस्यकिंलक्षणंवातदक्षरमितितच्छब्देनान्वयः॥उक्तमिति॥यथासुदीप्तात्पावकाद्विस्फुलिंगाःसहस्रशःप्रभवंतेस

सबाह्याभ्यंतरमजंवक्तव्यमित्युत्तरप्रश्नत्रयमारभ्यते॥तत्रसुदीप्तादिवाग्नेर्यस्मात्परादक्षरात्सर्वेभावाविस्फुलिंगाइवजायंतेतत्रचैवापियं

भगवन्नेतस्मिन्पुरुषेकानिस्वपंति

तीत्युक्तंद्वितीयेमुंडकेकेतेसर्वेभावाअक्षराद्विभज्यंतेकथंवाविभक्ताःसंतस्तत्रैवापियंतिकिंलक्षणंवातदक्षरमित्येतद्विवक्षयाऽधुनाप्रश्नानु
द्भावयति॥भगवन्नेतस्मिन्पुरुषेशिरःपाण्यादिमतिकानिकरणानिस्वपंतिस्वापंकुर्वंतिस्वव्यापारादुपरमंते॥ रूपाः तथाक्षराद्विविधाः सोम्य
भावाः प्रजायंतेतत्रचैवापियंतीतिमंत्रेणेत्यर्थः॥एतद्विवक्षयेति॥मंत्रोक्तार्थविस्तारानुवादित्वादस्यब्राह्मणस्येतिभावः॥अत्राक्षरस्वरूपस्यैवविव
क्षितत्वात्तन्निर्णयार्थंकानिस्वपंतीत्यादिप्रश्नः जागरितादीनांधर्मिविशेषनिर्धारणार्थः॥अन्यथातेषामात्मधर्मशंकायांतन्निर्विशेषत्वनिर्णयासिद्धेः
॥भावानांस्वरूपविभागादिविवक्षातुतां पुनरुदयतः प्रचरंतीनिदर्शनबलाद्यत्रैकीभावः ततोविभागेननिर्गमनमित्यक्षरेएकीभूतानांपृथिव्यादिका
र्यकरणानांअक्षराद्विभागप्रतीतेः तावन्मात्रेणभाष्येउक्तेतिद्रष्टव्यं॥तत्रआद्यप्रश्नेनजागरितस्यधर्मोपृष्टः॥स्वप्नेयस्यव्यापारोपरमेजागरितंनास्तिसतस्य

प्र·उ· द्वितीयेन अवस्थात्रयेपि शरीररक्षणं कस्य धर्म इति पृष्टं जाग्रतोऽनुपरतव्यापारस्य प्राणस्य देहरक्षकत्वोपपत्तेः तृतीयेन स्वप्नस्य धर्मो पृष्टः॥ चतुर्थेन सु टी·
१६ षुप्तिधर्मो सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शे सुखस्य सुषुप्तिसंबंधावगमात् पंचमप्रश्नेन अवस्थात्रयविनिर्मुक्तमवस्थात्रयपर्यवसानभूमिरू
पं तुरीयमक्षरं पृष्टमिति विवेकः॥ कार्यमिति॥ कार्यं शरीरं प्राणो वा करणानि मन आदीनि पदार्थानुक्त्वा वाक्यार्थं पिंडीकृत्याह॥ तत्किमिति॥ तस्येदं पूर्वापरयोः
संबध्यते॥ प्रसन्नमिति॥ विषयसंपर्ककालुष्यराहित्यं निरायासेन विक्षेपाभावमात्रेण लक्ष्यते॥ अभिव्यज्यते निवातस्थापितदीपालोकवत्॥ अनाबाधं विना

कानि चास्मिन्जाग्रति जागरणमनिद्रावस्थां स्वव्यापारं कुर्वंति २ कतरः कार्यकरणलक्षणयोरेष देवः स्वप्नान्पश्यति॥ स्वप्नो नाम जाग्रद्दर्शना
न्निवृत्तस्य जाग्रद्वदंतः शरीरे यद्दर्शनं तत्किं कार्यलक्षणेन देवेन निर्वर्त्यते किं वा करणलक्षणेन केनचिदित्यभिप्रायः॥३॥ उपरते च जाग्रत्स्वप्न

कान्यस्मिन्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति॥

व्यापारे यत्प्रसन्नं निरायासलक्षणं अनाबाधं सुखं कस्यैतद्भवति॥४॥ तस्मिन्काले जाग्रत्स्वप्नव्यापारादुपरताः संतः कस्मिन्नु सर्वे सम्यगेकी
भूताः संप्रतिष्ठिता मधुनि रसवत्समुद्रप्रविष्टनद्यादिवच्च शरहितं सत्समात्मस्वरूपमित्यर्थः॥ एतदिति॥ सुषुप्ते प्रकाशमानं सुखमहमस्वाप्स
मिति परामर्शमूलभूतमित्यर्थः॥ तस्मिन्काल इति॥ यद्यपि पंचमेन प्रश्नेन तुरीयं पृष्टं तेन सुषुप्तिस्तथापि संसारदशायां सर्वोपाधिरहिततुरीयावस्था
भावेन विवेकत एव तस्य प्रदर्शनीयत्वात्तत्सुषुप्तावज्ञाने सत्यपि इतरोपाधिराहित्येन तत्रैव सर्वोपाधिविवेककरणेन तुरीयप्रदर्शनस्य सुकरत्वात्तस्मिन् रामः
काले तुरीयप्रदर्शनार्थं सर्वसंप्रतिष्ठोक्तेति सम्यगेकीभूता इति तदात्मभावप्राप्त्या विलयं गता इत्यर्थः॥ मधुनि रसवदिति॥ यथा नानापुष्परसा मधुनि एकी १६

प्रश्नोपनिषट्टीका॥

विवेकाभावमात्रेणदृष्टांतावुक्तौ तत्रसर्वात्मनालयाभावादित्याह॥ विवेकानर्हाइति॥ पूर्वंविवेकानर्हाः संतः पश्चात् संप्रतिष्ठिताइत्यर्थः॥ नचानेनापि
प्रश्नेनअविद्यावासनाभिरविविक्तः सोऽप्रश्नएवपृष्टइतिशंक्यं परेआत्मन्यक्षरेसंप्रतिष्ठतइतिवक्ष्यमाणत्वात् सुषुप्तेचअज्ञानएवसंप्रतिष्ठानादेषहि
द्रष्टेत्यादिअज्ञानप्रतिबिंबितस्यभोक्तुरपिसंप्रतिष्ठायाअभिधास्यमानत्वादक्षायमित्यज्ञानाभावोक्तेश्चतुरीयमेवपृष्टमितिभावः॥ ननुकार्यकारणव्य
तिरिक्तेसंप्रतिष्ठानाधिकरणेसामान्येनकस्मिंश्चिदवगतेकस्मिन्संप्रतिष्ठिताइतिविशेषप्रश्नोघटतेनचतस्यावगतिरस्तिनचसंप्रतिष्ठानस्यसाधि
करणत्वेनसामान्येनाधिकरणावगतिरस्तीतिवाच्यंतत्तदुपादानानामेवाचेतनानांतदधिकरणत्वेनतदतिरिक्तस्यचेतनस्यासिद्धेरितिशंकते॥ नन्वि

विवेकानर्हाः प्रतिष्ठिताभवंतिसंगताः संप्रतिष्ठिताभवंतीत्यर्थः॥ ५॥ ननुन्यस्तदात्रादिकरणवत्स्वव्यापारादुपरतानिपृथक्पृथगेवस्वात्म
न्यवतिष्ठंतइत्येतद्युक्तंकुतः प्राप्तिः सुषुप्तपुरुषाणांकरणानांकस्मिंश्चिदेकीभावगमनाशंकायाः प्रष्टुर्युक्तेवत्वाशंकायतः संहतानिक

कस्मिन्नुसर्वेसंप्रतिष्ठिताभवंतीति॥

रणानिस्वाम्यर्थानिपरतंत्राणिचजाग्रद्विषयेतस्मात्स्वापेपिसंहतानांपारतंत्र्येणैवकस्मिंश्चित्संगतिर्न्याय्येतितस्मादाशंकानुरूपएवप्र प्र॰ टी॰

ति॥ दात्रंनामसस्यादिलवनार्थः शस्त्रविशेषः स्वात्मनीति॥ सोपादानइत्यर्थः॥ सुषुप्तपुरुषाणांकरणानामितिसुषुप्तपुरुषाणांयानिकरणानितेषामित्य
र्थः॥ एषहिद्रष्टेत्यादिनापुरुषाणामप्येकीभावस्यवक्ष्यमाणत्वाद्वापुरुषाणामित्युक्तं॥ अस्मिन्पक्षेकरणानांचेतिचकारोद्रष्टव्यः॥ प्रष्टुः शंकायाः॥
कुतः प्राप्तिरिति॥ अन्वयः संहतानांपरार्थत्वेनव्याप्तत्वात् संहतत्वेनहेतुनापरस्मिन्चेतनेसामान्येनावगतेप्रष्टुर्विशेषप्रश्नोयुक्तइत्याह॥ युक्तेवत्विति॥

प्र·उ· स्वाप्यर्थानिसंघाताभिमान्यर्थानिइत्यर्थः॥आशंकानुरूपइति॥मनसिविद्यमानाशंकानुरूपोवाचिकःप्रश्नइत्यर्थः॥अत्रसंप्रतिष्ठानविशि टी·
१७ ष्टआत्मानपृष्टः किंतुतदुपलक्षितःकेवलआत्मापृष्टइतिवाक्यतात्पर्यमाह॥अत्रत्विति॥भवंतीत्यनंतरंपृष्टमितिशेषः॥यत्त्वयापृष्टंतच्छृणु
इत्यन्वयः॥तस्यैवार्कस्यतामरीचयइत्यन्वयः॥विकीर्यंतइतिदशदिक्षुक्षिप्यंतइत्यर्थः॥स्वप्नेपिचक्षुरादिव्यापारोपलब्धेरेकीभावोऽसिद्धइत्या

अत्रतुकार्यकरणसंघातोयस्मिंश्चप्रलीनःसुषुप्तप्रलयकालयोस्तद्विशेषंबुभुत्सोःसकोनुस्यादितिकस्मिन्नुसर्वेसंप्रतिष्ठिताभवंतीति॥
तस्मैसहोवाचाचार्यःशृणुहेगार्ग्ययत्त्वयापृष्टंयथामरीचयोरश्मयोऽर्कस्यादित्यस्यअस्तमदर्शनंगच्छतःसर्वाअविशेषतएतस्मिंस्तेजोमंड
लेतेजोराशिरूपएकीभवंतिविवेकानर्हत्वमविशेषतांगच्छंति॥मरीचयस्तस्यैवार्कस्यताःपुनःपुनरुदयतउद्गच्छतःप्रचरंतिविकीर्यंते॥

तस्मैसहोवाचयथागार्ग्यमरीचयोऽर्कस्यास्तंगच्छतःसर्वाएतस्मिंस्तेजोमंडलएकीभवंतिताःपुनःपुनरुदयतःप्रचरंत्येवंहवैत
त्सर्वंपरेदेवेमनस्येकीभवति॥ यथायंदृष्टांतएवंहवैतत्सर्वंविषयेंद्रियादिजातंपरेप्रकृष्टेदेवेद्योतनवतिमनसिचक्षुरादिदेवानांम
नस्तंत्रत्वात्॥परोदेवोमनस्तस्मिन्स्वप्नकालेएकीभवतिमंडलेमरीचिवदविशेषतांगच्छतिजिजागरिषोश्चरश्मिवत्मंडलान्मनसएवप्रच
रंतिस्वव्यापारायप्रतिष्ठंते॥यस्मात्स्वप्नकालेश्रोत्रादीनिशब्दाद्युपलब्धिकरणानिमनस्येकीभूतानीवकरणव्यापारादुपरतानितेनतस्मात्तर्हित
स्मिन्स्वापकालेएषदेवदत्तादिलक्षणःपुरुषःनशृणोतिनपश्यति शंक्यवासनामयेंद्रियव्यापारोपलब्धावपिबाह्यशब्दादिश्रवणादिव्यापाराभावेनतं राम:
साधयितुंतेनेतिवाक्यंव्याख्याति॥यस्मादिति॥श्रोत्रादीनामेकीभावोनामस्वस्वव्यापारंविहायमनस्तंत्रतयावस्थानमात्रंनतुमुख्यमेकत्वंतेषांमनःप्रकृतिकत्वा १७

भावेनअप्रकृतैतदनुपपत्तेरित्यभिप्रेत्यइवकारः प्रयुक्तः नेयायतइतिद्रणोयडं तस्यरूपमेतन्नगच्छतीत्यर्थः॥कानिखपंतीत्यस्यसविषयाणिबाह्य
करणानिखपंतिउपरमंतेअतस्तेषामेवजागरणंधर्मइत्युत्तरमुक्त्वाकानिजाग्रतीत्यस्योत्तरमाह॥सुप्तवत्स्विति॥प्राणानामग्नित्वंगौणमित्याह॥अग्न
यइवेति॥अपानस्यगार्हपत्यत्वेयद्वार्हपत्यात् प्रणीयतेप्रणयनादितीदंवाक्यंव्यवहितमपिहेतुत्वेनयोजयति॥यस्मादिति॥प्रणयनादितिपदंगार्हपत्यवि

नजिघ्रतिनरसयतेनस्पृशतेनाभिवदतेनादत्तेनानंदयतेनविसृजतेनेयायतेस्वपितीत्याचक्षतेलौकिकाः१सुप्तवत्सुश्रोत्रादिषुकरणेषु
तस्मिन्पुरेनवद्वारेदेहेप्राणाग्नयःप्राणादिपंचवायवःअग्नयइवाग्नयोजाग्रतिअग्निसामान्यंहिगार्हपत्योहवाएषोऽपानः॥कथमित्याह

तेनतर्ह्येषपुरुषोनशृणोतिनपश्यतिनजिघ्रतिनरसयतेनस्पृशतेनाभिवदतेनादत्तेनानंदयतेनविसृजतेनेयायतेस्वपिती
त्याचक्षतेप्राणाग्नयएवैतस्मिन्पुरेजाग्रतिगार्हपत्योहवाएषोपानः॥व्यानोन्वाहार्यपचनोयद्गार्हपत्यात्प्रणीयतेप्रणयनादाहवनी
यःप्राणो ॥यस्माद्गार्हपत्यादग्नेरग्निहोत्रकालेइतरोग्निराहवनीयःप्रणीयतेप्रणयनात्प्रणीयतअस्मादितिप्रणयनोगार्हपत्यो
ग्निः तथासुप्तस्यापानवृत्तेःप्रणीयतइवप्राणोमुखनासिकाभ्यांसंचरत्यतआहवनीयस्थानीयःप्राणःव्यानस्तुहृदयाद्दक्षिणसुषिरद्वारेणनि
र्गमाद्दक्षिणादिक्संबंधादन्वाहार्यपचनः॥ प्रोषणमित्याह॥प्रणयनोगार्हपत्यइति॥तत्संदेष्टंआहवनीयःप्राणइतिवाक्यंसाद्दश्याभिधानपूर्वंव्या
चष्टे॥तथेति॥गार्हपत्यत्वेनोक्तेअपानेअंतर्गच्छतिसतिबहिर्गच्छन्प्राणस्ततोनिर्गच्छतइवलक्ष्यतइतिप्राणआहवनीयइत्यर्थः॥परिसक्तंव्यानो
न्वाहार्यपचनइतिवाक्यंइदानींव्याचष्टे॥व्यानस्त्विति॥छांदोग्येगायत्रीविद्यायांतस्यवाएतस्यहृदयस्यपंचदेवसुषयइत्युपक्रम्यअथयोस्यदक्षिणःसुषिः
सं२

श्वा ४

प्र·उ· सव्यानस्तक्रोत्रमित्यनेनव्यानस्यदक्षिणसुषिरनिर्गमनमुक्तमित्यस्यान्वाहार्यपचनसादृश्यंदक्षिणदिक्संबंधित्वंव्यानस्येतिसोन्वाहार्यपचनइत्यर्थः टी·
१८ ॥अत्रचेति॥ अग्निहोत्रस्यहोताहोमस्यकर्ताऋत्विक् उच्यते उत्तरवाक्येनेतिशेषः॥अत्र उच्छ्वासनिश्वासयोराहुतित्वस्यपूर्वमसिद्धत्वेनसिद्धवन्नि
र्देशायोगात मम मानइतिनच्छब्दानन्वयाच्चवाक्यत्रयंकृत्वा अन्वयत्रयेणयोजयति॥यच्चस्मादिति॥उच्छ्वासनिश्वासावित्यनंतरमाहुतीइतिपदंभा
ष्येअध्याहृत्यसतावुच्छ्वासनिश्वासौ आहुती आहवनीयाधिकरणाग्निहोत्राहुतीवत् द्वित्वसाम्यादेवेत्येकोन्वयः अनंतरंभाष्येतुशब्दस्यार्थेश्रुतिग
तइतिशब्दस्तस्मादित्यर्थेयस्मादेतावाहुती यस्माच्चएतौसमंनयतिशरीरस्थितिभावायसाम्येननयतिप्रवर्तयतियोवायुः यथाग्निहोत्रेहोमकर्ताआहु

अत्रच होताग्निहोत्रस्य यद्यस्मादुच्छ्वासनिश्वासावग्निहोत्राहुतीइव नित्यं द्वित्वसामान्यादेव तु एतावाहुती समं साम्येन शरीरस्थितिभावा

यदुच्छ्वासनिश्वासावेतावाहुतीसमंनयतीतिससमानो

यनयतियोवायुरग्निस्थानीयोपि होताचाहुत्योर्नेतृत्वात्कोसौसमानः॥ तिहुतंआहवनीयंप्रतिसमंनयतिप्रापयतितद्वत्तस्मादाहुत्योर्ने
तृत्वात्सवायुर्होतेतियच्छब्दहोतृशब्दाध्याहारेणद्वितीयोन्वयः॥कोसौवायुरितितद्विशेषप्रश्नेसहोतावायुःससमानइतितृतीयोन्वयइतिविभागः॥न
नुप्राणाग्नयइत्यत्रसर्वेषांप्राणानामग्नित्वोक्तेःकथमिहसमानस्यहोतृत्वमुच्यतइतिआशंक्योक्तंअग्निस्थानीयोपीतिअग्नित्वेनोक्तोपीत्यर्थः॥हो
ताचेति॥चोवधारणेहोतैवेत्यर्थः॥आहुतिनेतृत्वात्होतृत्वेस्थितेअग्नित्वोक्तिःछत्रिन्यायेनअग्न्यनग्निसमुदायेलाक्षणिकीत्यर्थः॥अवस्थात्रयव रामः
र्तिनामुच्छ्वासनिश्वासप्राणानांचाग्निहोत्रावयवत्वसंपादनस्यनोपासनंप्रयोजनंनिर्विशेषात्मप्रकरणत्वात्तद्विध्यदर्शनाच्चकिंतुइंद्रियाण्युपरमंते १८

प्राणा जाग्रतीत्येवं त्वंपदार्थशोधनरूपस्य ज्ञानस्य स्तुतिरेवेत्याह॥ अतश्चेति॥ सर्वदेति वाजसनेयके हि वाक्ति तः प्राणश्रितं श्व सुश्रितइत्यादिना स
र्वप्राणव्यापारेषु प्रत्येकं अग्निचितत्वदृष्टिं विधाय एवंदृष्टिमतः सर्वाणि भूतानि अस्य स्वापकालेपि चयनं कुर्वंतीति सा दृष्टिस्तुता तद्वदिहापीत्यर्थः
॥अत्रहीति॥ अत्र मनो यजमानः कल्प्यतइति व्यवहितान्वयः॥ तत्कल्पनायां हेतुद्वयमाह॥ यजमानवदिति॥ हेतुद्वयं साधयति॥ जाग्रत्स्विति॥ अ
त्र स्वप्नकाले विषयान्करणानि चोपसंहृत्य मनो जागर्ति प्राधान्येन स्वव्यापारं कुर्वद्वर्तते अग्निहोत्रफलं स्वर्गं जिगमिषुर्यजमान इव सुषुप्तिकाले

अतश्च विदुषः स्वापोप्यग्निहोत्रहवनमेव तस्माद्विद्वान्नाकर्मीत्येवमंतव्य इत्यभिप्रायः॥ सर्वदा सर्वाणि भूतानि विचिन्वंत्यपि स्वपत इति
हि वाजसनेयके अत्र हि जाग्रत्सु प्राणाग्निषु उपसंहृत्य बाह्यकरणानि विषयांश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुर्मनो ह वाव यजमा

मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥

नो जागर्ति यजमानवत्कार्यकरणेषु प्राधान्येन संव्यवहारात्स्वर्गमिव ब्रह्म प्रति प्रस्थितत्वाद्यजमानो मनः कल्प्यते इष्टफलं यागफलमेवोदानो
वायुरुदाननिमित्तत्वादिष्टफलप्राप्तेः कथं स उदानो मनआख्यं यजमानं स्वप्नवृत्तिरूपादपि प्रच्याव्याहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षरं गमय
त्यतो यागफलस्थानीय उदानः॥
स्वर्गरूपब्रह्म जिगमिषुश्च मन इत्यन्वयः॥ भाष्ये यजमान इत्यनंतरमिवशब्दो द्रष्टव्यः॥ ह वाव शब्देन तत्प्रसिद्धमित्युक्तं
॥इष्टेति॥ उदाननिमित्तकमरणानंतरं यागादिफलप्राप्तेस्तस्य तन्निमित्तत्वात्॥ कारणे कार्योपचारादुदान इष्टफलत्वेन कल्प्यत इत्यर्थः॥ न केवलं मरणद्वारा या
गफलप्रापकत्वमुदानस्य किंतु एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः॥ सर्वयागफलानामपि ब्रह्मात्मकत्वात्तद्ब्रह्मप्रापकत्वादपि अहरहरिष्टफ
लप्रापकत्वमुदानस्येति प्रश्नपूर्वकमाह॥ कथमिति॥

प्र·उ· स्वर्गमिवेतिस्वर्गमेवेत्यर्थः॥सर्वयागफलात्मकस्वरूपमेवब्रह्मास्यरंगमयतीत्यर्थः॥यद्यपिअहरहर्ब्रह्मप्राप्तिर्नयागसाध्यायागरहितानामपितत्प्राप्तेः टी·
१९ तथापिब्रह्मणएवसर्वयागफलत्वेनतत्प्रापकस्योदानस्येष्टफलप्रापकत्वमस्तीतिभावः॥नचउदानस्यकथंतत्प्रापकत्वमितिशंक्यं॥तस्यसुषुम्नानाडीचा
रित्वेनसःमनस्तन्नाडींप्रवेशयंस्तद्द्वतब्रह्मप्रापयतीत्युपपत्तेः॥ननुगार्हपत्योवाएषोऽपानइत्यारभ्यमनोहवावयजमानइत्यंतेनग्रंथेनविदुषःकर्मीनभ
वतीतिस्तूयतइत्युक्तंअस्त्वेवंतत्रअग्निहोत्रादिकर्मप्रतीतेरुदानस्ययागफलस्यानीयत्वोक्तेस्तुनतत्फलत्वंतत्रकर्माप्रतीतेरतआह॥एवंविदुषइति॥वि
दुषेति॥श्रोत्रादीनिस्वप्नेउपरमंतेप्राणाएवजाग्रतीत्येवंरूपाविद्येत्यर्थः॥अस्याश्चविद्यायाःजागरणंश्रोत्रादिबाह्येंद्रियधर्मःशरीररक्षणंप्राणधर्मोना

एवंविदुषः श्रोत्राद्युपरमकालादारभ्ययावत्सुप्तोत्थितोभवतितावत्सर्वयागफलानुभवएवनाविदुषामिवानर्थायेतिविदुत्तास्तूयतेनहि
विदुषएवश्रोत्रादीनिस्वपंतेप्राणाग्नयोवाजाग्रतिजाग्रत्स्वप्नयोर्मनःस्वातंत्र्यमनुभवदहरहःसुषुप्तंवाप्रतिपद्यतेसमानंहिसर्वप्राणिनां
पर्यायेणजाग्रत्स्वप्नसुषुप्तिगमनं॥अतोविदुत्तास्तुतिरेवेयमुपपद्यते॥यत्स्वप्नंकतरएषदेवःस्वप्नान्पश्यतीतितदाह॥अत्रोपरतेषुश्रोत्रा
दिषुदेहरक्षायैजाग्रत्सुप्राणादिवायुषुप्राक्सुषुप्तिप्रतिपत्तेरेतस्मिन्नंतरालेकालेएषदेवो
त्मधर्मइत्येवंत्वंपदार्थविवेकरूपत्वात्स्तोतव्यत्वोप
पत्तिः॥अतएवप्राणजागरणस्याविदुत्साधारणत्वात्कथंविदुत्तास्तुतिरित्यपिशंकानिरस्तातस्यैवंभूतविवेकाभावादिति॥ननुविद्याप्रकरणत्वाद
स्यविदुषःश्रोत्राद्युपरमादिकंसर्वंभवतीतिविधीयतांकिंस्तुत्येत्याशंक्यविदुद्विदुत्साधारण्येनस्वयमेवभवतोनविधेयत्वमित्याह॥नहीति॥वि
दुत्तास्तुतिरेवेतिश्रोत्रादिकंपरेदेवेमनस्येकीभवतिप्राणाग्नयोजाग्रतीत्यत्रपदार्थविवेकरूपंज्ञानंविवक्षितंतज्ज्ञानंगार्हपत्योवाएषोपानइत्या रामः
दिनास्तूयतेउक्तप्रकारेणेत्यर्थः॥तृतीयप्रश्नोत्तरत्वेनकतरएषइत्यादिसर्वःपश्यतीत्यंतंव्याचष्टे॥यदिति॥कतरइति॥अत्रेतिश्रौतंपदंगृहीत्वा १२

उपरतेष्वित्यादिनांतरालद्रष्टृत्वं तेन॥ अनेकेति॥ विषयिविषयाद्यनेकभावगमनमित्यर्थः इदं च महत्वव्याख्यानं स्वप्नद्रष्टुः जीवस्य स्वातंत्र्ये वक्तव्ये देव शब्दितमनसस्तदुक्तिः स्वप्नो मनोधर्मो नात्मधर्मः॥ आत्मनि तु तदारोपमात्रं लोकस्येति ख्यापनार्थेति शंकापरिहाराभ्यामाह॥ नन्विति॥ मनउपाधिकृतमिति बाह्येंद्रियप्रयुक्तमनउपाधिकृतं जागरणं केवलमनउपाधिकृतः स्वप्न इत्यर्थः॥ स्वप्नस्य धीशब्दवाच्यमनःपरिणामत्वात् स्वप्नो भूत्वेति श्रुतौ सामानाधिकरण्यनिर्देश इति द्रष्टव्यं॥ ननु इयं श्रुतिः विभूत्यनुभवने मनःस्वातंत्र्यं वक्तुं न शक्नोति श्रुत्यंतरविरोधापत्तेः अतोऽत्र देवशब्देन क्षेत्रज्ञ एवो

ऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयीलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते। ननु महिमानुभवने करणं मनोऽनुभवितुः तत्कथं स्वातंत्र्येणानुभवतीत्युच्यते॥ स्वतंत्रो हि क्षेत्रज्ञः॥ नैष दोषः॥ क्षेत्रज्ञस्य स्वातंत्र्यस्य मन

अत्रैष देवः स्वप्ने महिमानमनुभवति

उपाधिकृतत्वान्नहि भवति क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्ति वा मनउपाधिकृतमेव तस्य जागरणं स्वप्नं चेत्युक्तं वाजसनेयके सधीः स्वप्नो भूत्वा ध्यायतीव लेलायतीवेत्यादि तस्मान्मनसो विभूत्यनुभवे स्वातंत्र्यवचनं न्याय्यमेव॥ मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयं ज्योतिष्ट्वं बाध्येत इति केचित्॥

व्यतेतस्यैव सतः स्वातंत्र्यमिति शंकते॥ मनइति॥ स्वयंज्योतिष्ट्वमिति स्वयंज्योतिष्ट्वबोधकश्रुतिरित्यर्थः॥ अन्यथा द्वितीयसत्वेपि दीपादीनामिव वास्तवस्य तस्य बाधाभावादिति॥ अत्र किं मनसः सत्वे ज्योतिरंतरस्य मनसो विद्यमानत्वादात्मनः स्वयंज्योतिष्ट्वबोधनं न शक्यमिति श्रुतेः कार्यस्य बोधनस्य बाधोऽभिप्रेतः उत तद्बोधनरूपकार्यसिध्यर्थं मनसोऽभावोपि विवक्षितः श्रुतौ न तत्र तत्सत्वे श्रुत्यर्थबाध इति वा नाद्यः॥

प्र·उ· मनसिसत्यपिएवंतर्हीतिवक्ष्यमाणरीत्यामनसोदृश्यत्वेनज्योतिष्ट्वायोगेनआत्मनएवस्वयंज्योतिष्ट्वस्यबोधयितुंशक्यत्वादित्याह॥तन्नेति॥नद्विती टी·
२०· यः॥तदानींमनसोऽभावस्तुश्रुत्यर्थएवनभवतीत्याह॥श्रुत्यर्थे॥आत्मनिज्योतिष्ट्वबोधनात्मकव्यवहारस्यप्रकाश्यादिसापेक्षत्वात्तस्मिनसत्येवतद्बोधसाध
नेमनआदेश्चसत्त्वेवतद्बोधयितुंशक्यतेनान्यथेतिमनआद्यभावोनश्रुतौविवक्षितःतथासतितद्बोधनाशक्तेरित्याह॥यस्मादिति॥तत्रमानमाह॥यत्रवेति॥
द्वितीयाभावेव्यवहारोनास्तीत्यत्रापिमानमाह॥मात्रेति॥दृश्यंमात्राशब्दार्थः॥असंसर्गइतिच्छेदः॥दृश्याऽसंसर्गेसुषुप्तौविशेषविज्ञानाभावोक्त्याद्वितीयाभावे
व्यवहारोनास्तीत्यर्थः॥अतोनद्वितीयःकल्पःसंभवतीत्याह॥अतइति॥ननुयदिस्वयंज्योतिष्ट्वबोधनार्थेमनआद्यभावोनापेक्षितःजागरितेपितर्हितत्त

तन्नश्रुत्यर्थापरिज्ञानकृताभ्रांतिस्तेषांयस्मात्स्वयंज्योतिष्ट्वादिव्यवहारोप्यामोक्षांतःसर्वोऽविद्याविषयएवमनआद्युपाधिजनितः॥यत्र
वाअन्यदिवस्यात्तत्रान्योन्यत्पश्येत्॥मात्राऽसंसर्गस्त्वस्यभवति॥यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतिभ्यः॥अतोमंदब्रह्म
विदामेवेयमाशंकानत्वेकात्मविदां॥ननुएवंसतिअत्रायंपुरुषःस्वयंज्योतिरितिविशेषणमनर्थकंभवति॥अत्रोच्यते॥अत्यल्पमिदमुच्यते
यएषोंतर्हृदयआकाशस्तस्मिनछेतइतिअंतर्हृदयपरिच्छेदकारणेसुतरांस्वयंज्योतिष्ट्वंबाध्येत॥ द्बोधनसंभवादत्रेतिस्वप्नवाचिविशेषणमनर्थ
कमितिशंकते॥नन्विति॥किंविशेषणबलान्मनसोऽभावःसिसाधयिषितःउतविशेषणस्यगतिमात्रंदृष्टव्यतेनाद्यःमनसोऽभावांगीकारेपिअंतर्हृदयाकाश
सतत्कृतपरिच्छेदस्यचश्रुतिसिद्धत्वेनतन्मतेपितत्रस्वयंज्योतिष्ट्वबोधनासंभवाद्विशेषणानर्थक्यंतुल्यमित्याह॥अत्रोच्यतइति॥परिच्छेदोधिकोच्यते
सुतरांइतितरपःप्रयोगःस्वयंज्योतिष्ट्वमितितद्बोधनमित्यर्थः॥यथाश्रुतेवास्तवस्यतस्यबाधस्यानाशंक्यत्वादिति॥यद्यपिस्वप्नेअंतर्हृदयाकाशसत्त्वात्स राम:
न्यक्स्वयंज्योतिष्ट्वंबोधयितुंनशक्यमितिदोषस्तुल्यःतथापिस्वप्नेमनसोऽभावेनतद्बोधनप्रतिबंधकस्यार्थस्याभावाददुरविप्रकर्षेणस्वयंज्योतिष्ट्वंस्वप्ने २०
अत्रअन्यदप्युच्यतेर्द्ध॥विसंवादः १

बोधयितुं शक्यमिति तद्विशेषणमर्थवदिति शंकते॥ सत्यमिति॥ स्यादित्यनंतरं तथापीति शेषः॥ केवलतयेति॥ मनसो भावेनेत्यर्थः भारस्येति प्रतिबंधकस्येत्यर्थः॥ शेषबोधनं तु सुषुप्ते भविष्यतीत्यभिप्रायः॥ एवं तर्हि सुषुप्ते सर्वस्याप्यभावमाश्रित्य सम्यग्बोधनं विवक्षणीयं न च तत्संभवति तत्रापि बहुप्रतिबंधकस्य विद्यमानत्वादित्याह॥ न तत्रापीति॥ सुषुप्तेपीत्यर्थः॥ अत्रापीति॥ स्वप्नेपीत्यर्थः॥ सुषुप्ते चेत् सर्वभारापनयः स्यात्तदा स्वप्नेऽर्धभारापनयाभिप्रायो वर्णयितुं शक्यते न च तदस्ति अतोऽत्रेति विशेषणं तदाप्यनर्थकमित्यर्थः॥ तर्हि विशेषणस्य गतिर्वक्तव्येति द्वितीयं शंकते॥ कथं तर्हीति॥ अत्रैष देवः स्वप्ने महिमानमनुभवतीति अथर्वशाखावाक्यार्थकथनावसरे काण्वश्रुतिगतविशेषणस्य गतिर्न वक्तव्या प्रकृतानुपयोगादिति सिद्धांत्येकदेशी कश्चि

सत्यमेवमयं दोषोऽपद्यपि स्यात् स्वप्ने केवलतया स्वयंज्योतिष्ट्वं नार्द्ध तावदपनीतं भारस्येति चेन्न तत्रापि पुरीततिनाडीषु शेत इति श्रुतेः॥ पुरीतन्नाडीसंबंधादत्रापि पुरुषस्य स्वयंज्योतिष्ट्वं नार्द्धभारापनयाभिप्रायो मृषैव॥ कथं तर्ह्यत्रायं पुरुषः स्वयंज्योतिरिति अन्यशाखा लादनपेक्षा साश्रुतिरिति चेन्न॥ अर्थैकत्वस्येष्टत्वात्॥ एको ह्यात्मा सर्ववेदांतानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च तस्माद्युक्ता स्वप्ने आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुं श्रुतेर्यथार्थतत्त्वप्रकाशकत्वात्॥ एवं तर्हि श्रुणु श्रुत्यर्थं हित्वा सर्वमभिमानं॥ मंदः शंकते॥ अन्येति॥ सर्ववेदांतप्रत्ययन्यायेनाथर्वश्रुत्यविरोधेन एकवाक्यतया श्रुत्यर्थस्य वर्णनीयत्वात्तदविरोधोपि वक्तव्य इति पूर्ववाद्याह॥ नार्थैकत्वस्येति॥ तर्हि काण्वश्रुतिरर्थाभावात् त्यज्यतामत आह॥ श्रुतेर्यथार्थेति॥ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरर्थावबोधफलकत्वात्तुल्यं च सांप्रदायिकमिति न्यायाच्च अक्षरमात्रस्याप्यानर्थक्यायोगादित्यर्थः॥ एवमेकदेशिनि दूषिते सिद्धांत्युत्तरमाह॥ एवं तर्हीति॥ तर्ह्यादावेव मुख्यश्रुत्यर्थ उच्यतां किं पूर्वोक्तरीत्या पक्षांतराशंकातन्निराकरणाभ्यामित्याशंक्य पांडित्याभिमानवतः यथावदर्थबोधे अनधिकारात्तस्य तदभिमानावतारचिकीर्षया तदीयना ना

प्र.उ. पक्षानिराकृताइतिवक्तुंसर्वमभिमानंनिरस्येत्याद्युक्तंस्वयंज्योतिष्ट्वश्रुतेरनतिशंक्यत्वात्तद्बलात्स्वप्नादोहृदयाकाशादिसत्वेपितत्संबंधप्रतीत्य टी.
२१ भावाद्द्दियमानस्यापिअविद्यमानतुल्यत्वेनात्मनःकेवलत्वात्प्रकाशदर्शनाच्चस्वयंज्योतिष्ट्वमितिबोधनीयंमनसोऽभाववादिनापिएवंमनसिस
त्यपितस्यवासनामयगजतुरगादिविषयतयापरिणामाद्दृश्यत्वाच्चद्रष्टुस्ततोभेदेनविवेकत्तःश्रुत्यास्वप्रकाशत्वंबोध्यतइत्याह॥यथेत्यादिना॥मन
सीतिसत्यपीतिशेषः॥ननुमनश्चेदविद्यादिनिमित्तवशाद्गजतुरगादिरूपेणाभिव्यक्तवासनावत्तर्हिजाग्रतीवतस्याऽहंतयैवप्रतीतिःस्यान्नेदंतया
अतआह॥कर्मनिमित्तेति॥तथाप्रतीतिंविनास्वप्नेभोगासिद्धेःस्वप्नभोगप्रदकर्मनिमित्तवशाज्जाग्रतिगजादीनामिदंतयानुभवेनतद्वासनानाम
न्त्वभिमानेनवर्षशतेनापिश्रुत्यर्थोज्ञातुंशक्यतेसर्वैःपंडितंमन्यैः॥यथाहृदयाकाशेपुरीततिनाडीषुवस्वपतस्तत्संबंधाभावात॥ततो
विविच्यदर्शयितुंशक्यतइत्यात्मनःस्वयंज्योतिष्ट्वंनबाध्यतेएवंमनस्यविद्याकामकर्मनिमित्तोद्भूतवासनावति॥कर्मनिमित्तवासना
विद्ययाऽन्यद्वस्त्वंतरमिवपश्यतःसर्वकार्यकरणेभ्यःप्रविविक्तस्यद्रष्टुर्वासनाभ्योदृश्यरूपाभ्योऽन्यत्वेनस्वयंज्योतिष्ट्वंसुदर्पिनेनापि
तार्किकेणकेनवारयितुंशक्यते॥ पितथैवानुभवार्हत्वेनतद्वासनारूपाविद्यावशाच्चवासनाश्रयस्यमनसइदंतयैवस्त्वंतरवत्प्रतीतिरित्य
र्थः॥इदंचविशेषणंमनसोविषयत्वेनविषयित्वासंभवात्विषयिणःआत्मनस्वप्रकाशरूपत्वमितिवक्तुंजाग्रतिआदित्यादिकार्यज्योतिषांचक्षु
रादिकरणज्योतिषांचसत्वेनतत्संकीर्णत्वेनआत्मनःस्वयंज्योतिष्ट्वंदुर्बोधंस्वप्नेतुतदभावात्सुबोधमितिवक्तुंसर्वकार्येत्यादिविशेषणं॥स्वप्नेआ
दित्यादिकार्यकरणज्योतिषांभासमानत्वेपि॥तेषांवासनामात्रत्वाद्दृश्यत्वाच्चविषयप्रकाशनासामर्थ्यमितिवक्तुंवासनाभ्यइत्यादिविशेषणं॥एते राम:
श्चविशेषणैःस्वप्नएवंभूतेस्वयंज्योतिष्ट्वस्यबोधयितुंशक्यत्वादन्यत्रासंभवादत्रायमितिश्रुतौस्वप्नविशेषग्रहणमर्थवदित्युक्तमितिद्रष्टव्यंस्वयंज्योति २१

अतः करणवृत्तौ स्वप्ने मनस अभावविवक्षाकारणाभावेन तद्विरोधाभावात्॥ अत्र देवशब्देन परे देवे मनसि एकीभवतीत्युक्तं मन एवोच्यत इत्युक्तमुपसंह
रति॥ तस्मादिति॥ नन्विंद्रियाणामुपरतत्वाद्विषयसंबंधाभावात्कथं मनसो महिमानुभवद्दतिशंकते॥ कथमिति॥ पूर्वंज्ञातस्येव स्वप्ने ज्ञानात्स्ववासना
मात्रत्वमतोनेंद्रियापेक्षेत्याह॥ उच्यत इति॥ यदिति॥ यन्मित्रं पुत्रं वा पूर्वं दृष्टवान् तदेव दृष्टं पुत्रमित्रादिविषयवासनासमुद्भूतं मित्रं पुत्रं वाऽविद्यया पश्यतीति

तस्मात्साधूक्तं॥ मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान् पश्यति॥ कथं महिमानमनुभवतीत्युच्यते॥ यन्मित्रं पुत्रादि वा पूर्वं
दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रमित्रमिव वाऽविद्यया पश्यतीत्येवं मन्यते॥ तथा श्रुतमर्थं तद्वासनयाऽनुशृणोतीव देशदि

यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभू
तं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति॥

गंतरैश्च देशांतरैर्दिगंतरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतीवाविद्यया॥ तथादृ
ष्टं चास्मिन् जन्मन्यदृष्टं च जन्मांतरदृष्टमित्यर्थः॥ अत्यंतादृष्टे वासनानुपपत्तेः एवं श्रुतं चाश्रुतं चानुभूतं चास्मिन् जन्मनि केवलेन मनसा अननुभूतं
च मनसैव जन्मांतरेऽनुभूतमित्यर्थः॥ सच्च परमार्थोदकादि असच्च मरीच्युदकादि किं बहुनोक्तानुक्तं सर्वं पश्यति सर्वः पश्यति सर्वं मनोवासनोपाधिः स
न्नेवं सर्वकरणात्मा मनो देवः स्वप्नान् पश्यति॥५॥

दृष्टवानित्यादिपदाध्याहारेण वाक्यं योज्यमन्यथा पुत्रमिति द्वितीयाया यापकृद्व्स्य चानन्वयः स्यादिति व
तुरभावेन दर्शनायोगान्मन्यत इत्युक्तं॥ तथेति॥ अत्रापि योऽर्थः श्रुतः तमेव श्रुतमर्थमित्यध्याहारेणैव श्रुतिर्योज्या देशा नदीतीरादिः दिक् प्राच्यादिरिति भावः
प्रत्यनुभूतं प्रतिवारमनुभूतं पुनः पुनरनेकदिनेषु अनेकस्वप्नेष्वनुभवतीत्यर्थः॥ जन्मांतरदृष्टमिति व्याख्याने हेतुमाह॥ अत्यंतेति॥ अनुभूतं चेत्यस्य प्रत्यनुभू

तमित्यनेन पुनरुक्तिमाशंक्याह॥ केवलेनेति॥

प्र.उ. पूर्वमिंद्रियद्वारकानुभवउक्तइत्यपौनरुक्त्यमित्यर्थः॥सर्वदर्शनेहेतुमाह॥सर्वइति॥कस्यैतत्सुखंभवतीत्यस्योत्तरंतदपेक्षितंवदन्नाह॥सयदेति॥पित्ता टी.
२२ ख्येनेति॥इदमुपलक्षणंचिद्रूपेणब्रह्मणाचेत्यपिद्रष्टव्यं॥तन्मनःप्राणमेवोपश्रयतइतिश्रुत्यंतरेप्राणशब्दितेब्रह्मणितस्यलयाभिधाना त्तिरस्कृतेति॥वा
सनाभिव्यक्तौद्वारंस्वप्नभोगप्रदंकर्मतत्तिरस्कृतंतत्रउपरतंभवतितेजःशब्दितब्रह्मचैतन्यसंबंधादित्यर्थः॥रश्मयइतिवासनाइत्यर्थः॥अविशेषविज्ञा
नेति॥सामान्यचैतन्यरूपेणेत्यर्थः॥चेतनाशब्दितसामान्यवृत्तिरूपेणवाअनेनसुषुप्तउक्तइत्याह॥तदेति॥नन्वथैतत्सुखंभवतीत्ययुक्तंजन्यसुखस्यत

सयदामनोरूपोदेवोयस्मिन्कालेसौरेणपित्ताख्येनतेजसानाडीशयेनसर्वतोभिभूतोभवतितिरस्कृतवासनाद्वारोभवति॥तदासहकरणै
र्मनसोरश्मयोहृद्युपसंहृताभवंति॥यदामनोदार्वग्निवदविशेषविज्ञानरूपेणकृत्स्नंशरीरंव्याप्यावतिष्ठते तदासुषुप्तोभवति॥अत्रैतस्मि

सयदातेजसाभिभूतोभवत्यत्रैषदेवःस्वप्नान्नपश्यति

न्कालेएषमनआख्योदेवःस्वप्नान्नपश्यतिदर्शनद्वारस्यनिरुद्धत्वात्तेजसा॥अथतदाएतस्मिन्शरीरेएतत्सुखंभवतियत्तद्विज्ञानंनिराबाध
मविशेषेणशरीरव्यापकंप्रसन्नंभवतीत्यर्थः॥एतस्मिन्कालेऽविद्याकामकर्मनिबंधनानिकार्यकरणानिशांतानिभवंति॥तेषुशांतेष्वात्म
स्वरूपमुपाधिभिरन्यथाविभाव्यमानमद्वयमेकंशिवंशांतंभवतीत्येतामेवावस्थांपृथिव्याद्यविद्याकृत दानीमसंभवात्स्वरूपसुखस्यपूर्वमपिसमत्वेन
तदाभवतीत्यनुपपत्तेरित्याशंक्यस्वरूपसुखमेवविशेषविज्ञानरूपविक्षेपाभावेनिवातस्थदीपप्रभावत्सम्यक्प्रकाशतेतदपेक्षमेतद्वचनमित्याह॥यद्विज्ञान रामः
मिति॥विज्ञानरूपंस्वरूपसुखमित्यर्थः॥अनेनआनंदमयकोशशब्दितःप्रनभिव्यक्तमनआदिवासनावद्ज्ञानंसुषुप्तधर्मीत्युक्तंपंचमप्रश्नस्योत्तरंतुरियस्वरूपवि २२

[illegible] ॥

पूर्वमन्यथाविभाव्यमानमित्यर्थः॥मात्रानुप्रवेशेनेति॥मात्राणांविवेकृतः अक्षरेऽनुप्रवेशेनेत्यर्थः॥आपोमात्राऽइत्यत्रविभक्त्यलोपश्छांदसः॥स्थूला
निचेति॥पंचीकृतानिचेत्यर्थः॥ततश्चपंचीकरणमेतत्कृतिसिद्धमित्युक्तंअन्यथाआकाशाकाशमात्रयोः पृथगुक्तिरनुपपन्नेरिति॥यद्यपिमंतव्यादयोमन

मात्रानुप्रवेशेनदर्शयितुंदृष्टांतमाह॥सदृष्टांतोयथायेनप्रकारेणसोम्यप्रियदर्शनवयांसिपक्षिणोवासार्थंवृक्षंवासोवृक्षंप्रतिसंप्रतिष्ठंते
गच्छंत्येवंयथादृष्टांतोहवैतद्वक्ष्यमाणंसर्वंपरेआत्मन्यक्षरेसंप्रतिष्ठते॥किंतत्सर्वंपृथिवीचस्थूलापंचगुणातत्कारणानपृथिवीमात्रा
गंधतन्मात्रातथाऽपश्चापोमात्राचतेजश्चतेजोमात्राचवायुश्चवायुमात्राचआकाशश्चाकाशमात्राचस्थूलानिचसूक्ष्माणिचभूतानीत्यर्थः॥

अथतदेतस्मिंच्छरीरेएतत्सुखंभवतिसयथासोम्यवयांसिवासोवृक्षंसंप्रतिष्ठंतेएवंहवैतत्सर्वंपरआत्मनिसंप्रतिष्ठतेपृ
थिवीचपृथिवीमात्राचापश्चापोमात्राचतेजश्चतेजोमात्राचवायुश्चवायुमात्राचाकाशश्चाकाशमात्राच॥चक्षुश्चद्रष्टव्यंचश्रोत्रं
चश्रोतव्यंचघ्राणंचघ्रातव्यंचरसश्चरसयितव्यंचत्वक्चस्पर्शयितव्यंचवाक्चवक्तव्यंचहस्तौचादातव्यंचोपस्थश्चानंदयितव्यं
चपायुश्चविसर्जयितव्यंचपादौचगंतव्यंचमनश्चमंतव्यंच

तथाचक्षुरिंद्रियं॥रूपंचद्रष्टव्यंचश्रोत्रंचश्रोतव्यंचघ्राणंचघ्रातव्यं
चरसश्चरसयितव्यंचत्वक्चस्पर्शयितव्यंचवाक्चवक्तव्यंचहस्तौचादातव्यंचउपस्थश्चानंदयितव्यंचपायुश्चविसर्जयितव्यंचपादौचगंत
व्यंचबुद्धींद्रियाणिकर्मेंद्रियाणितथाचोक्तानि॥

आदिचतुष्टयविषयाअपिद्रष्टव्यादिविषयाएवनपृथक्कृतयापिमंतव्यत्वादिरूपे
णपृथगितिपृथङ्निर्दिष्टाइतिद्रष्टव्यं॥प्रकाशविशिष्टत्वगितिलगाश्चयंचर्मतत्प्रकाशनिर्भासंचतदेवेत्यर्थः॥पृथिवीचेत्यादिना॥ ॥

प्र॰उ॰ विधारयितव्यंचेत्यंतेनआत्मव्यतिरिक्तंतदुपाधिभूतंसर्वंचोक्तमित्याह॥ सर्वंहीति॥ एषहिद्रष्टेत्यादिनाउपहितस्वरूपमुच्यतइत्याह॥ अतः टी॰
२३ परमिति॥ द्रष्टेतिउपाधिकृतमपिद्रष्टृत्वादिकमुपाधिव्यतिरिक्तेऽनुपहितेआत्मन्यारोपितंस्फटिकेलौहित्यवदस्तीतिउपाधिभिन्नोप्यात्माद्र
ष्टेत्यादिनोक्तः विज्ञानात्मेत्यत्रद्रष्टेत्यादाविवकर्तृत्ववाचकत्वाऽभावात् विज्ञानंयज्ञंतनुतइत्यादाविवबुद्धेरभिधानेपौनरुक्त्यमाशंक्याह॥ विज्ञान

मनश्चपूर्वोक्तंमंतव्यंचतद्विषयः बुद्धिश्चनिश्चयात्मिकाबोद्धव्यंचतद्विषयः अहंकारश्चाभिमानलक्षणमंतःकरणमहंकर्तव्यंचतद्वि
षयः चित्तंचेतनावदंतःकरणंचेतयितव्यंचतद्विषयस्तेजश्चत्वगिंद्रियव्यतिरेकेणप्रकाशविशिष्टायात्वक्तयानिर्भासितोविषयोविद्योत
यितव्यः प्राणश्चसूत्रंयदाचक्षतेतेनविधारयितव्यंसंग्रथनीयंसर्वंहिकार्यकारणजातंपारार्थ्येनसंहतंनामरूपात्मकमेतावदेव॥ अतःप

बुद्धिश्चबोद्धव्यंचाहंकारश्चाहंकर्तव्यंचचित्तंचचेतयितव्यंचतेजश्चविद्योतयितव्यंचप्राणश्चविधारयितव्यंच॥ एषहिद्रष्टास्प्र
ष्टाश्रोताघ्रातारसयितामंताबोद्धाकर्ताविज्ञानात्मापुरुषः सपरेअक्षरेआत्मनिसंप्रतिष्ठतेपरमेवाक्षरंप्रतिपद्यते॥ रं यदात्मरू

पंजलसूर्यकादिवद्भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टमेषहिद्रष्टास्प्रष्टाश्रोताघ्रातारसयितामंताबोद्धाकर्ताविज्ञानात्माविज्ञानंविज्ञायतेऽनेने
तिकरणभूतंबुद्ध्यादिइदंतुविजानातीतिविज्ञानंकर्तृकारकरूपंतदात्मातत्स्वभावः विज्ञानस्वभावइत्यर्थः॥ पुरुषः कार्यकरणसंघातो
क्तोपाधिपूर्णत्वात्पुरुषः सच मिति॥ करणभूतमिति॥ विज्ञानमयइत्यादाविवेत्यर्थः॥ एषहीतिहि शब्दश्चशब्दार्थकः सचसंप्रतिष्ठितइतिक्रि राम
यानुकर्षणार्थइतिवदन्द्रष्टुरात्मनः पृथिव्यादितत्त्वरूपेणअक्षरेलयोनसंभवतीत्याशंक्यउपाधिलयेउपहितरूपाभावमेवास्यलयइत्याह॥ सचेति २३

एवंजाग्रदादीनामन्यधर्मत्वोक्त्याशोधिततुर्यात्मानुवादेनतस्याक्षरैक्याभिधानपुरःसरंतज्ज्ञानस्यफलमुच्यतउत्तरवाक्येनेत्याह॥ तदेकत्वेति॥ व
क्ष्यमाणलक्षणमक्षरंप्रतिपद्यतइत्येवंरूपंफलमाहेत्यन्वयः उत्तरवाक्यमितिशेषः॥ उक्तमर्थंश्रुत्यक्षरारूढमाह॥ एतदुच्यतइति॥ सयइत्यार्थ
माह॥ सर्वेति॥ अत्राधिकारिणोदुर्लभत्वंसयोहवाइत्यनेनोक्तंसयःकश्चिदेवापूर्ववत्तदच्छायादिविशेषणमक्षरंवेदयतइत्येकंवाक्यंसमापनीयंय
स्तुवेदयतेससर्वज्ञइतिवाक्यांतरंकार्यंअन्यथायच्छब्दद्वयानन्वयात् आद्यवाक्येअच्छायादिविशेषणत्रयेणकारणसूक्ष्मस्थूलशरीरत्रयनिराकर

जलसूर्यकादिप्रतिबिंबस्यसूर्यादिप्रवेशवज्जगदाधारेःशेषेपरेक्षरे आत्मनिसंप्रतिष्ठते॥ तदेकत्वविदःफलमाह॥ परमेवाक्षरंव
क्ष्यमाणविशेषणंप्रतिपद्यतइति॥ एतदुच्यते॥ सयोहवैतत्सर्वैषणाविनिर्मुक्तोऽच्छायंतमोवर्जितंअशरीरंनामरूपसर्वोपाधिश

सयोहवैतदच्छायमशरीरमलोहितंशुभ्रमक्षरंवेदयते॥

रीरवर्जितमलोहितंलोहितादिसर्वगुणवर्जितंयतएवमतःशुभ्रंशुद्धंसर्वविशेषणरहितत्वादक्षरंसत्यंपुरुषाख्यंअप्राणंअम
नोगोचरंशिवंशांतंसबाह्याभ्यंतरमजंवेदयतेविजानाति॥ यस्तुसर्वत्यागीसोम्यससर्वज्ञोनतेनाविदितंकिंचित्संभवति॥ येन अवस्था
त्रयनिराकरणेनअवस्थात्रयराहित्यमनूद्यतेलोहितादिगुणवर्जितमित्यनेनतद्गुणकस्थूलशरीरवर्जितमितिप्रतीतेः॥ शुभ्रमित्यनेनतमेवतु
रीयमनूद्यतस्याक्षरसामानाधिकरण्येनऐक्यमुक्तमितिविवेकः॥ अत्राक्षरमित्यनेनाक्षरंपुरुषंवेदसत्यंसबाह्याभ्यंतरोह्यजः॥ अप्राणोह्यमनाःशु
भ्रइतिमंत्रोक्तानिसर्वाणिविशेषणान्यात्मोपलक्षणान्यात्मोपलक्षणार्थंसंगृहीतानीत्याह॥ सत्यमित्यादिना॥ यस्तुसर्वत्यागीतिअत्रापिवाक्येवेद

एतद्वस्यानुषंगः॥

प्र.उ. अत्रसर्वज्ञइत्यनेनकस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतीतिप्रतिज्ञातंसर्वविज्ञानमुक्तंसर्वात्मत्वस्यज्ञानजन्यत्वेअनित्यत्वंस्यादत‌आह॥पू टी.
२४ र्वमिति॥एवंचारोपनिवृत्तिद्वाराअनुभूततद्भावोविवक्षितइत्याह॥सर्वोभवतीति॥अग्न्यादिभिरिति॥ततश्चचक्षुश्चद्रष्टव्यंचेत्यत्रापिचक्षुरादिभिर्देवाअ
प्युपलक्षिताइतिव्याख्यातं॥ ॥इतिप्रश्नोपनिषद्भाष्यविवरणेचतुर्थःप्रश्नःसमाप्तः॥ ॥एवंचतुर्थप्रश्नेनउत्तमाधिकारिणःपदार्थशोधनपूर्वकवाक्यार्थे

पूर्वमविद्ययाअसर्वज्ञआसीत्पुनर्विद्ययाऽविद्यापनयेसर्वोभवतितदातस्मिन्नर्थेएषश्लोकोमंत्रोभवत्युक्तार्थसंग्राहकः॥विज्ञानात्मासह
देवैश्चाग्न्यादिभिःप्राणाश्चक्षुरादयोभूतानिपृथिव्यादीनिसंप्रतिष्ठंतिप्रविशंतियत्रयस्मिन्नक्षरेतदक्षरंवेदयतेयस्तुसोम्यप्रियदर्शनससर्व

यस्तुसोम्यससर्वज्ञःसर्वोभवतितदेषश्लोकः॥विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्र॥तदक्षरंवेदयते
यस्तुसोम्यससर्वज्ञःसर्वमेवाविवेशेति॥इतिप्रश्नोपनिषत्चतुर्थप्रश्नः॥अथहैनंशैब्यःसत्यकामःपप्रच्छसयोहवैतद्भगवन्म
नुष्येषुप्रायणांतमोंकारमभिध्यायीत

ज्ञःसर्वमेवाविवेशआविशतीत्यर्थः॥इतिप्रश्नोपनिषद्भाष्येचतुर्थःप्रश्नः॥अथहैनंशैब्यःसत्यका
मःपप्रच्छअथेदानींपरापरब्रह्मप्राप्तिसाधनत्वेनोंकारस्योपासनविधित्सयाप्रश्नआरभ्यते॥सयःकश्चिद्धवैभगवन्मनुष्येषुमनुष्याणांमध्येतद
द्भुतमिवप्रायणांतंमरणांतंयावज्जीवमित्येतदोंकारमभिध्यायीताभिमुख्येनचिंतयेत ज्ञानेनअक्षरप्राप्तिमुक्त्वाअत्रानधिकारिणोमंदवैराग्यवतः
ॐमित्येवंध्यायतआत्मानंप्रणवोधनुरित्यादिमंत्रसूचितंब्रह्मलोकप्राप्तिद्वाराक्रमेणाक्षरप्राप्त्यर्थंॐकारोपासनंवक्तुंपंचमप्रश्नमवतारयति॥अथहैनमि राम:
ति॥इदानीमितिगार्ग्यप्रश्ननिर्णयानंतरमित्यर्थः॥परेति॥अपरब्रह्मलोकप्राप्तिक्रमेणपरब्रह्मलोकप्राप्तिसाधनत्वेनेत्यर्थः॥तदद्भुतमिवेति ॥ २५

तदितिक्रियाविशेषणं तादृशमभिध्यानमिति तेन विशेषणेन अद्भुतत्वं दुष्करत्वं भातीत्यर्थः ॥ अभिध्यानेन तत्पूर्वकालीने प्रत्याहारधारणे सू-
चिते इत्याह ॥ बाह्येति ॥ भक्त्या आदरेण उपचारेण वा आवेशितः आरोपितो ब्रह्मभावो यस्मिन् ॐकारे तस्मिन् समाहितचित्त इत्यन्वयः ॥ अनेन धा-
रणोक्ता ध्यानशब्दार्थमाह ॥ आत्मेति ॥ संतानाविच्छेद इति अविच्छिन्नसंतान इत्यर्थः ॥ प्रत्ययांतरेण विजातीयप्रत्ययेनाखिलीकृतः अनंतरितः चि-
त्तस्य आत्मविषयस्यैव सतः एकदेशेन विक्षेपं वारयति ॥ निवातेति ॥ ध्यानेनैव यमादिसाधनजातमपि सूचितमित्याह ॥ सत्येति ॥ कतमभिति उत

बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशितब्रह्मभावे ओंकारे आत्मप्रत्ययसंतानाविच्छेदो भिन्नजातीयप्रत्ययांतरा-
खिलीकृतो निवातस्थदीपशिखासमोऽभिध्यानशब्दार्थः ॥ सत्यब्रह्मचर्याहिंसाऽपरिग्रहत्यागसंन्यासशौचसंतोषामायावित्वाद्यनेक

कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः ॥

यमनियमानुगृहीतः स एवं यावज्जीवव्रतधारणः कतमं वाव अनेके हि ज्ञानकर्मभिर्जेतव्या लोकास्तिष्ठंति तेषु तेनोंकाराभिध्यानेन कत-
मं स लोकं जयतीति पृष्टवते तस्मै स होवाच पिप्पलादः ॥ एतद्वै सत्यकाम एतद्ब्रह्म वै परं चापरं च ब्रह्म परं सत्यमक्षरं पुरुषाख्यमपरं च प्रा-
णाख्यं प्रथमजं यदोंकार एव ॥ मंत्रोऽर्थं बहुशुनिर्धारणं दर्शयति ॥ अनेके हीति ॥ ॐकाराभिध्यानं ध्यानत्वात् दहराद्युपासनवत् परप्राप्ति-
साधनमेव उत परप्राप्तिसाधनमपीति प्रष्टुरभिप्रायः तदभिप्रायज्ञः पिप्पलादः अपरालंबनतया ध्यानं चेत् परप्राप्तिमात्रसाधनं परालंबनत्वेन चेत् क्र-
मेण परप्राप्तिसाधनमित्युत्तरमाह ॥ एतद्वा इति ॥ एतद्यच्छब्दयोर्नपुंसकयोरोंकारविशेषणत्वायोगाद्ब्रह्मविशेषणत्वमाह ॥ एतद्वै इति ॥ किं तद्ब्रह्मेत्य

प्र.उ. यदेतत् परं चापरं च ब्रह्मास्ति तदुभयमोंकार इति वाक्यान्वय इत्यर्थः॥ न चैवं ब्रह्मोद्देशेन ॐकारत्वविधाने ब्रह्मण्योंकारदृष्टिः प्रसज्येतेति शंक्यं॥ ब्र टी.
२५ ह्मदृष्टिरुत्कर्षादिति न्यायेन लोके प्रसामोपासीतेत्यादाविव निकृष्टे ॐकार एव ब्रह्मदृष्टिः सिध्यतीति भावः॥ तयोर्भेदात्कथमैक्यमित्याशंक्योपचा
रादित्याह॥ ॐकारप्रतीकत्वादिति॥ अनेन सामानाधिकरण्येन ॐकारस्य प्रतीकत्वमुपदिश्यत इति भावः॥ ननु किं प्रतीकोपदेशेन साक्षादेव ब्रह्मा
भिधीयतामत आह॥ परं हीति॥ शब्दादीति॥ शब्दादिभिः साक्षात् बोधनानर्हमित्यर्थः॥ आदिशब्देनानुमानादिर्गृह्यते॥ प्रवृत्तिनिमित्तस्य धर्मस्य लिं
गस्य चाभावादिति तत्र हेतुमाह॥ सर्वेति॥ न शक्यमिति॥ अवगाहयितुमित्यन्वयः॥ तर्हि इंद्रियैर्मनसा वा तद्ग्रहोऽस्त्वित्यत आह॥ अतींद्रियेति॥ मनसे

ॐकारात्मकमोंकारप्रतीकत्वात् परं हि शब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितमतो न शक्यमतींद्रियगोचरत्वात् केवलेन मनसा
वगाहयितुं ॐकारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्॥ तथाऽपरं च
ब्रह्म तस्मात्परं चापरं च ब्रह्म यदोंकार इत्युच्यते॥ तस्मादेवं विद्वानेतेनैवात्मप्राप्तिसाधनेनैवोंकाराभिध्यानेनैकतरं परमपरं वान्वेति ब्रह्मा
नुगच्छति

ति॥ इंद्रियैर्वेत्यपि द्रष्टव्यं॥ तर्हि तथाविधस्य ॐकारेऽप्यावेशासंभवात् किंचिद्विशेषमारोप्यावेशो वक्तव्यः अत एव सूर्यांतर्गतत्वं विशेषं
वक्ष्यति ॐकारतादात्म्यं च तत्कथं निर्विशेषलाभः अत आह॥ ॐकारे त्विति॥ प्रसीदतीति तदुपासनेन चित्तस्य नैर्मल्ये सति निर्विशेषं स्वयमेव प्रकाशत
इत्यर्थः॥ तत्र मानमाह॥ शास्त्रेति॥ अन्यथा परब्रह्मार्थिनस्तदुक्तिवैयर्थ्यादित्यर्थः॥ तथापरं चेति॥ प्रसीदतीत्यन्वयः॥ तस्मादिति प्रतीकत्वादित्य
र्थः॥ तस्मादेवं विद्वानिति॥ ब्रह्मत्वात् ब्रह्मत्वार्हमिति विद्वानित्यर्थः॥ एतेनैवेत्यनंतरं आयतनेन आलंबनेनेति पदद्वयं प्रमादतो गलितमिति द्रष्ट रामः
व्यं॥ तस्य पदस्य पिंडितार्थमाह॥ ॐकारेति॥ ननु एतच्छब्दार्थकथनमेतदिति द्रष्टव्यं अभिध्यानस्यायतनत्वाभावादिति ॥ ७ ॥ ७ ॥ ७ ॥ २५

इतरोपासनवदस्याप्युपासनत्वात् परप्रापकत्वं न संभवतीत्यत आह॥ नेदिष्टमिति॥ मनआद्यपेक्षया इदं नेदिष्ठं समीपवर्ति अंतरंगं श्रेष्ठमालंबनं एतदालंबनं श्रेष्ठमेतदालंबनं परमित्यादिश्रुतेरित्यर्थः॥ नेदिष्ठत्वमेव संस्तुवन् उत्तरवाक्येन साधयति॥ सयदीति॥ विकलस्यापि फलजनकत्वान्नेदिष्ठत्वमित्यर्थः॥ सकलेति॥ अकारादिमात्रात्रयात्मकः ॐकारः स च उपासितव्यः इति न जानाति किंतु अकारमात्रमुपासितव्यं जानातीत्यर्थः॥ तथापि एकदेशज्ञानवैगुण्यतया दुर्गतिं न गच्छति किंतर्हि ॐकाराभिध्यानप्रभावात्तदेकदेशध्यानप्रभावाद्विशिष्टामेव गतिं गच्छतीत्यन्वयः॥ तात्पर्यार्थमुक्त्वा इदानीमक्षरार्थमाह॥ यद्यप्येवमिति॥ यदि शब्दो यद्यपीत्यर्थे व्याख्यातः एवं च स तेनैवेत्यत्र प्राक्तयापीति पदं द्रष्टव्यं॥ एकमात्रमिति॥ एकमात्रात्मकमोंकारमकारमित्यर्थः एकमात्राविशिष्टे तत्रापि एकमात्रात्वविशिष्टेत्यर्थः॥ ॐकारेति तदवयवेत्यर्थः॥ एकमात्राप्रधानं अप्रधानीभूतमात्राद्वयं कृत्स्नमोंकारमिति॥ केचिद्वाचस्पतेर्दीपिकायां वाचस्पत्ये च अकारमात्रमित्येव व्याख्यातं॥ संबोधितइति॥ तन्मात्राध्यानेन तन्मात्रासाक्षात्कारवानित्यर्थः॥ पृथिव्यां किमभिसंपद्यत इति कर्माकांक्षते॥ किमिति॥ मनुष्यलोकमिति पदमि

नेदिष्टं ह्यालंबनमोंकारो ब्रह्मणः स यद्यप्योंकारस्य सकलमात्राविभागज्ञो न भवति तथाप्योंकाराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति एतदेकदेशज्ञानवैगुण्यतयोंकारशरणः कर्मज्ञानोभयभ्रष्टो न दुर्गतिं गच्छति किंतर्हि यद्यप्येवमोंकारमेवैकमात्राविभागज्ञ एव केवलो

ᐡस यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयंते॥

भिध्यायीतैकमात्रं सदाध्यायीत॥ तेनैवैकमात्राविशिष्टोंकाराभिध्यानेनैव संवेदितः संबोधितः तूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसंपद्यते किं मनुष्यलोकमनेकानि हि जन्मानि जगत्यां संभवंति

ᐡतस्माद्विह्वानेतेनैवायतनेनैकतरमन्वेति ᐡ

दिहकार्योंकाप्यूपयंति॥ मनुष्यलोकमिति॥

मनुष्यशरीरमित्यर्थः॥पृथिव्यांमनुष्यलोकस्यैवनियमात्तदुक्तिवैयर्थ्यमतआह॥अनेकानिहीति॥पश्वादीनिहीत्यर्थः॥तर्हितस्यनियमेनकथंमनुष्य
त्वप्राप्तिरतआह॥नन्नतमिति॥ऋग्वेदरूपाहीति॥पृथिव्यकारःसऋग्वेदइतिश्रुतेरकारस्यतद्रूपत्वमित्यर्थः॥अभिध्याताअकाररूपमात्राऋग्वेद
रूपेत्यन्वयः॥तेनेति॥येनऋग्वेदरूपत्वंतस्यतेनऋचोमनुष्यलोकमुपनयंतइत्यर्थः॥वीतश्रद्धइति॥श्रद्धाविरहितःसन्नित्यर्थः॥योगभ्रष्टइति॥
एकदेशज्ञानविकलइत्यर्थः॥अनेननहिकल्याणकृत्कश्चिदितिगीतावाक्यसंवादःसूचितः॥द्विमात्रेणविशिष्टमिति॥द्वितीयमात्रात्वेनविशिष्टमों

तत्रतंसाधकंजगत्यांमनुष्यलोकमेवऋचोपनयंतेउपनिगमयंतिऋचोऋग्वेदरूपाह्योंकारस्यप्रथमाएकमात्राभिध्याता॥तेनसतत्र
मनुष्यजन्मनिद्विजाग्र्यःसन्तपसाब्रह्मचर्येणश्रद्धयाचसंपन्नोमहिमानंविभूतिमनुभवतिनवीतश्रद्धोयथेष्टचेष्टोभवतियोगभ्रष्टःकदा

सतत्रतपसाब्रह्मचर्येणश्रद्धयासंपन्नोमहिमानमनुभवत्यथयदिद्विमात्रेण ॥

विदपिनदुर्गतिंगच्छति॥अथपुनःयदिद्विमात्राविभागज्ञोद्विमात्रेणविशिष्टमोंकारमभिध्यायीत॥स्वप्नात्मकेमनसिमननीयेजगन्म
येयजुर्मयेसोमदैवत्येसंपद्यतेएकाग्रतयात्मभावंगच्छतिसएवंसंपन्नो कारंतद्वतमुकारमित्यर्थः॥ननुमात्राद्वयमकारस्यपूर्वमेवोक्तत्वा
त्अतएवद्वितीयमात्रारूपमितिवक्ष्यति॥श्रुतौतृतीयाद्वितीयार्थेॐकारमभिध्यायीतेत्युपक्रमात्इतिभावः॥अत्राभिध्यानंतादात्म्याभिमान
पर्यंतमितिवक्तुंमनसिसंपद्यतइतिवाक्यंतत्रसाक्षात्मनःसंपत्तेःसाधनत्वेनवाफलत्वेनवाअनन्वयात्मनःशब्देनतत्परिणामस्वप्नादिलक्षण
द्वारास्वप्नयजुराद्यात्मत्वेनश्रुत्यंतरेश्रुतोंकारएवलक्ष्यतइत्याह॥स्वप्नात्मकइति॥उकारेसंपत्तिपर्यंतमभिध्यानंयःकरोतीतिवाक्यार्थइत्यर्थः॥

अत्र केचित्स यदीत्यादि यः पुनरित्यंतं न स्तुतिः किंतु उक्तफलाय अकारे विश्वाभिन्नविराडुपासनं उकारे तैजसाभिन्नहिरण्यगर्भोपासनं च विवक्षि
तमित्याहुः॥ तन्मते मनःशब्देनांडपरिणामस्य प्राणाभिमानी हिरण्यगर्भ उच्यत इति वक्तुं सप्तात्मक इत्यादि विशेषणानीति बोध्यं॥ दीपिकायां तु मात्रा
द्वयस्य मिलितस्योपासनं मनसि संपत्तिश्च मनसा एकाग्रतया चिंतनमिति च व्याख्यातं॥ एवमोंकारं स्तुत्वा तदुपासनं परब्रह्मविषयं विधत्ते॥ यः पुन
रिति॥ विज्ञानविशिष्टेनेति॥ विज्ञानविषयीकृतेनेत्यर्थः॥ मात्रात्रयात्मना ज्ञातेनेति यावत् पूर्ववदत्रापि त्रिमात्रेणेत्यत्र तृतीया मात्रा मकार उच्यत इ

ऽभूतांतरिक्षमंतरिक्षाधारं द्वितीयमात्रारूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयंतीति तं यजूंषीत्यर्थः॥ सत

मनसि संपद्यते सोंतरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते॥ यः पुनरेतं त्रिमात्रेणो
मित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत

त्र विभूतिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्तते॥ यः पुनरेतमोंकारं त्रि
मात्रेण त्रिमात्राविषयविज्ञानविशिष्टेन ॐमित्येतेनैवाक्षरेण परं सूर्यांतर्गतं पुरुषं प्रतीकेनाभिध्यायीत॥ तेनाभिध्यानेन॥ प्रतीक
त्वेन ह्यालंबनत्वं प्रकृतमोंकारस्य परं वापरं च

निभ्रममवारयितुं ॐमित्येतेनैवाक्षरेणेत्युक्तं॥ पूर्वत्र तत्तन्मात्राप्रधान ॐकार एवोच्यत इति म
ते इहैवेदं विशेषणमनुपपन्नं पूर्वत्राप्योंकारस्यैवोक्तत्वादिति तन्मतमनुपपन्नमिव भातीति॥ त्रिमात्रेणेति तृतीयाश्रवणात् ॐकारो न प्रतीकं
तथा सति विषयत्वेन कर्मतया द्वितीया स्यात् किंतु अभिध्यायकत्वेन करणत्वमेव तृतीयाबलादिति भ्रममवारयति॥ प्रतीकेनेति॥ तस्य कर्मत्वे
पिकारकत्वेन अभिध्यानक्रियानिर्वर्तकत्वेन हेतुत्वात्तन्मात्रविवक्षया तृतीयोपपद्यत इत्यर्थः॥ एवंव्याख्याने हेतुमाह॥ प्रतीकत्वेनेति॥ ॥

अभेदेति॥ प्रतीकत्वेहि अधिष्ठानाध्यस्यमानयोस्तादात्म्यारोपादभेदश्रवणमुपपद्यते॥ करणत्वेतु नतदुपपद्यतइत्यर्थः॥ अनेकशइति॥ ॐकार
मभिध्यायीतसयद्येकमात्रमभिध्यायीतेतिद्विवारं श्रुतेत्यर्थः॥ अन्यथेत्यस्यबाध्येतेत्यनेनान्वयः॥ अथयदिद्विमात्रेणयः पुनरेतंत्रिमात्रेणेतिचतृती
यापिद्विवारं श्रुताहेतुत्वापेक्षयाकरणत्वेन स्वरसाच्चकारकविभक्तित्वात् ततस्तस्याअपिबाधोनयुक्तइतिशंकते॥ यद्यपीति॥ द्वितीयाद्वयस्यापिकर्मत्वेस्या

ब्रह्मैत्यभेदश्रुत्योंकारमितिचद्वितीयानेकशःश्रुताबाध्येतअन्यथा॥ यद्यपितृतीयाभिधानत्वेनकरणत्वमुपपद्यते॥ तथापिप्रकृतानुरोधा
त्रिमात्रंपरंपुरुषमितिद्वितीयैवपरिणेया॥ त्यजेदेकंकुलस्यार्थेतिन्यायेन॥ सतृतीयमात्रारूपेतेजसिसूर्येसंपन्नोभवतिध्यायमानोमृतोपि

सतेजसिसूर्येसंपन्नः यथापादोदरस्त्वचाविनिर्मुच्यतएवंहवैसपाप्मनाविनिर्मुक्तःससामभिरुन्नीयतेब्रह्मलोकंसएतस्माज्जी
वघनात्परात्परंपुरिशयंपुरुषमीक्षते

सूर्यात्सोमलोकादिवन्नपुनरावर्तते किंतुसूर्येसंपन्नमात्रएवयथापादोदरःसर्पस्त्वचाविनिर्मुच्य
तेजीर्णत्वग्वियुक्तःसपुनर्नवोभवति॥ एवंहवैएषयथादृष्टांतःसपाप्मनासर्पत्वक्स्थानीयेनाशुद्धिरूपेणविनिर्मुक्तःसामभिस्तृतीयमात्रा
रूपैरूर्ध्वमुन्नीयतेब्रह्मलोकंहिरण्यगर्भस्यब्रह्मणोलोकंसत्याख्यं॥ सहिरण्यगर्भः रस्यादुपक्रमस्यत्वाच्चतस्यैवप्राबल्यमित्याह॥ तथापीति॥
प्रकृतेतिप्रक्रमानुरोधादित्यर्थः॥ किंचद्वितीयाद्वयमुक्ताभेदश्रुतिःएतेनैवायतनेनैकतरमन्वेतिआयतनेनैवान्वेतीतिआलंबनवाच्यायतनश्रुतिद्वयं
चेतिबहुश्रुत्यनुरोधेनतृतीयाद्वयंत्याज्यमित्याह॥ त्यजेदेकमिति॥ तृतीयमात्रारूपेति॥ यद्यपिमात्रात्रयध्यानान्मात्रात्रयरूपित्वमेवतस्यतथापितृतीयमा
त्रायाएवइहासाधारण्यात्प्राधान्येननिर्देशइतिबोध्यं॥ तृतीयमात्रारूपइतिसप्तम्यंतपाठेतत्सूर्यविशेषणंमकारस्यादित्यात्मकत्वादिति॥ हिरण्यगर्भस्य

जीवघनत्वमनागतावेक्षणन्यायेनोपपादयति॥ सहिरण्यगर्भइति॥

लिंगरूपेणेतिसमष्टिलिंगरूपेणेत्यर्थः॥ तस्मिन्हीति॥ समष्टिलिंगात्मनि हिरण्यगर्भेव्यष्टिलिंगाभिमानिनः सर्वेजीवागोलसामान्येखंडमुंडादयइ
वसंहताइत्यर्थः॥ इदानींवाक्यंयोजयति॥ सविद्घानिति॥ सविद्घानिदानींध्यायमानः पश्चात्ब्रह्मलोकंप्राप्तः तत्रब्रह्मलोकेस्थावरजंगमेभ्यः परा
त्जीवघनात्परंपुरुषंपश्यति ततोमुक्तोभवतीत्यन्वयः॥ तत्रयः पुनरेतमित्यादिनोक्तेर्थेआद्यमंत्रंयोजयति॥ तिस्र इति॥ मृत्युगोचराइति॥ प्रत्ये

सर्वेषांसंसारिणांजीवानामात्मभूतः सह्यंतरात्मालिंगरूपेणसर्वभूतानांतस्मिन्हिलिंगात्मनिसंहताः सर्वेजीवास्तस्मात्सजीवघनः
सविद्वान्त्रिमात्रोंकाराभिज्ञः एतस्माज्जीवघनाद्धिरण्यगर्भात्परात्परं परमात्माख्यंपुरुषमीक्षतेपुरिशयंसर्वशरीरानुप्रविष्टंप
श्यतिध्यायमानः॥ तदेतस्मिन्यथोक्तार्थप्रकाशकौमंत्रौभवतः॥ तिस्रस्त्रिसंख्याकाअकारोकारमकाराख्याॐकारस्यमात्राः म

तदेतौश्लोकौभवतः॥ तिस्रोमात्रामृत्युमत्यः प्रयुक्ताअन्योन्यसक्ताअनविप्रयुक्ताः

त्युमत्यः मृत्युर्यासांविद्यतेतामृत्युमत्यः मृत्युगोचरादनतिक्रांतामृत्युगोचराएवेत्यर्थः॥ ताआत्मनोध्यानक्रियासुप्रयुक्ताः किंचान्योन्य
सक्ताइतरेतरसंबद्धाअनविप्रयुक्ताविशेषेणैकैकविषयएवप्रयुक्ताविप्रयुक्तानतथाविप्रयुक्ताअनविप्रयुक्ताः किंतर्हिविशेषेणै
कस्मिन्ध्यानकालेतिसृषुक्रियासुबाह्याभ्यंतरमध्यमासुजाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासुयोगक्रियासुसम्यक् कंब्रह्मद
ष्टिंचविनातदुपासकानांमृत्य्वनतिक्रमादित्यर्थः॥ ब्रह्मदृष्ट्यासंश्लिष्टत्वेनसंभूयचप्रयुक्ताश्चेन्नात्यंदोषइत्याह॥ किंचेति॥ जाग्रदितिजाग्रत्पुरुषो
वैश्वानराभिन्नोविश्वः तत्स्थानंस्थूलशरीरंजागरितंचस्वप्नपुरुषस्तुहिरण्यगर्भाभिन्नस्तैजसस्तत्स्थानंलिंगशरीरंस्वप्नश्चसुषुप्तोपीश्वरात्माप्राज्ञस्तत्

प्र॰ उ॰ स्थानमध्याहृतं सुषुप्तिश्च तेषां मकारादितादात्म्येन यद्भिध्यानं तल्लक्षणासु योगक्रियासु प्रयुक्तासु अन्योन्यसक्ता अनविप्रयुक्ताः तिस्रो मात्राः प्र दी॰
२९ युक्ताश्चेन्नकंपत इत्यन्वयः॥ अनेन सर्वात्मके परब्रह्मणि ईश्वरे ॐकाराभेदेन ध्यानमुक्तं॥ यथोक्तेति॥ तिस्रो मात्रा इति श्लोकोक्तविभाग इत्यर्थः

प्रयुक्तासु सम्यक् ध्यानकाले प्रयोजितासु न कंपते न चलते ज्ञो योगी यथोक्तविभागज्ञ ॐकारस्येत्यर्थः॥ न तस्यैवंविदश्चलनमुपपद्यते
॥ यस्मात् जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोंकारात्मरूपेण दृष्टाः स ह्येवं विद्वान् सर्वात्मभूत ॐकारमयः कुतो वा
चलेत्कस्मिन्वा॥ सर्वार्थसंग्रहार्थो द्वितीयो मंत्रः॥ ऋग्भिरेतं लोकं मनुष्योपलक्षितं यजुर्भिरंतरिक्षं सोमाधिष्ठितं सामभिर्यत्तद्ब्रह्मलो

क्रियासु बाह्याभ्यंतरमध्यमासु सम्यक् प्रयुक्तासु न कंपते ज्ञः॥ ऋग्भिरेतं यजुर्भिरंतरिक्षं सामभिर्यत्तत्कवयो वेद
यंते॥ तमोंकारेणैवायतनेनान्वेति विद्वान्॥ कमिति तत्तृतीयं कवयो मेधाविनो विद्यावंत एव न त्वविद्वांसो वेदयंते तं त्रिविधं लो
कमोंकारेण साधनेनापरब्रह्मलक्षणमन्वेति अनुगच्छति विद्वान्॥ तेनैवोंकारेण यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शांतं विमुक्तं जाग्र
त्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपंचविवर्जितं अत एवाजरं जरावर्जितममृतं मृत्युवर्जितं अत एव यस्माज्जराविक्रियारहितमतो अभयं
यस्मादेवाभयं तस्मात्परं निरतिशयं तदप्योंकारेणायतनेन गमनसाधनेनान्वेतीत्यर्थः॥ इतिशब्दो वाक्यपरिसमाप्त्यर्थः॥ इति प्रश्नोपनिषदि पंचमः प्रश्नः॥

कुतो वेति चलनं विक्षेपः स्वस्य सर्वात्मत्वेन स्वव्यतिरिक्ताभावाच्चलनं न संभवतीति॥ कुतो हेतोः कस्मिन्वा विषये चलेदित्यर्थः॥ अपरब्रह्मप्राप्त्यर्थं यः ॐकारः रामः
प्रयुक्तस्तेनैव न पृथक् प्रयुक्तः परमपि प्राप्नोति ब्रह्मलोके उत्पन्ननिर्विशेषब्रह्मसाक्षात्कारेण उक्तस्योंकारस्य क्रममुक्तिफलत्वादित्याह॥ तेनैवेति॥ ॥ ॥ २९

येनापरमन्वेतितेनैवपरमप्यन्वेतीत्येवकारार्थइत्यर्थः॥तदप्योंकारेणेति॥आयतनविशेषणार्थंपुनरोंकारग्रहणमितिनपुनरुक्तिरितिबोध्यं॥इति
प्र॰भाष्यविवरणेपंचमप्रश्नःसमापितः॥गताःकलाःपंचदशप्रतिष्ठाःकर्माणिविज्ञानमयश्चेतिमंत्रेकर्मभिःसहषोडशकलानांपरस्मिन्लयमुक्त्वाय
थानद्यःस्यंदमानाइतिमंत्रेणदृष्टांतोक्तिद्वारापरप्राप्तिरुक्तातन्मंत्रयोर्विस्तराभिधानार्थंषष्ठंप्रश्नमारभते॥अथहैनमिति॥तस्यपूर्वेणसंगतिमुक्त्वार्था
नुवादपूर्वकमाह॥समस्तमित्यादिना अक्षरस्यकारणत्वार्थंप्रलयेपितस्मिन्नेवलयमाह॥सामर्थ्यादिति॥लयाधारत्वेनकारणत्वमाह॥ततइति॥

अथहैनंसुकेशाभारद्वाजःपप्रच्छ॥समस्तंजगत्कार्यकारणलक्षणंसहविज्ञानात्मनापरस्मिन्नक्षरेसुषुप्तिकालेसंप्रतिष्ठतइत्युक्तंसाम
र्थ्यात्प्रलयेपितस्मिन्नेवाक्षरेसंप्रतिष्ठतेजगत्ततएवोत्पद्यतइतिसिद्धंभवति॥नह्यकारणेकार्यस्यसंप्रतिष्ठानमुपपद्यतेउक्तंचात्मन

यत्तत्स्थानमजरममृतमभयंपरंपरायणंचेति॥१॥अथहैनंसुकेशाभारद्वाजःपप्रच्छ

एषप्राणोजायतइतिजगतश्चयन्मूलंतत्परिज्ञानात्परंश्रेयइतिसर्वोपनिषदांनिश्चितोर्थः॥अनंतरंचोक्तंसर्वज्ञःसर्वोभवतीतिवक्तव्यंक
तर्हितदक्षरंसत्यंपुरुषाख्यंविज्ञेयमिति

यद्यप्यद्वितीयात्मज्ञानान्मुक्तिःनकारणज्ञानात्तथापितस्यकारणत्वेनतद्व्यतिरेकेणकार्याभावात्तदद्वितीयत्व
ज्ञानंसिध्यतीतितादृशात्मज्ञानात्परंश्रेयइतिआत्मावाइदमेकएवसएतमेवपुरुषंब्रह्मततममपश्यत्प्रज्ञानंब्रह्मसएतेनप्रज्ञेनात्मनाअमृतःसमभव
त्सदेवैकमेवाद्वितीयमित्युपक्रम्यआचार्यवान्पुरुषोवेद॥अथसंपत्स्ये॥तमेवैकंजानथ॥अमृतस्यैषसेतुःअहंब्रह्मास्मीति॥तस्मात्तत्सर्वमभव
दित्यादिषुनिश्चितमित्यर्थः॥इहापितादृगात्मज्ञानादेवसर्वात्मभावःश्रेयउक्तइत्याह॥अनंतरमिति॥वृत्तमनूद्यवर्तिष्यमाणमाह॥वक्तव्यमिति॥

प्र·उ· तदर्थोयमिति॥तस्यशरीरांतस्थत्वोक्तिद्वारातस्यप्रत्यगात्मत्वज्ञानार्थमित्यर्थः॥प्रश्नमिति॥प्रष्टव्यमित्यर्थः॥अज्ञानेकारणमिति॥अज्ञानसंभाव दी·

२९ तदर्थोयंप्रश्नआरभ्यते॥वृत्तांतव्याख्यानंचविज्ञानस्यदुर्लभत्वख्यापनेनतल्लब्ध्यर्थंमुमुक्षूणांयत्नविशेषोत्पादनार्थंवाहेभगवन्हि
सं रण्यनाभोनामतःकोशलायांभवःकौशल्योराजपुत्रोजातितःक्षत्रियोमामुपेत्योपगम्यैतंमुच्यमानंप्रश्नमपृच्छतषोडशकलंषोडशसं
ख्याकाःकलाअवयवाइवात्मन्यविद्याध्यारोपितरूपाःयस्मिन्पुरुषेसोऽयंषोडशकलस्तंषोडशकलंहेभारद्वाजपुरुषंवेत्थविजाना
सितमहंराजपुत्रंकुमारंपृष्टवंतंअब्रुवंउक्तवानस्मिनाहमिमंवेदयंत्वंपृच्छसीत्येवमुक्तवत्यपिमय्यज्ञानमसंभावयंतंतमज्ञानेकार

भगवन्हिरण्यनाभःकौसल्योराजपुत्रोमामुपेत्यैतंप्रश्नमपृच्छतषोडशकलंभारद्वाजपुरुषंवेत्थतमहंकुमारमब्रुवं
नाहमिमंवेदयद्यहमिममवेदिषंकथंतेनावक्ष्यमिति॥

णमवादिषंयदिकथंचिदहमिमंत्वयापृष्टंपुरुषमवेदिषंविदितवानस्मि
नाहमिमंकथमस्मैत्वंतशिष्यगुणवतेऽर्थिनेतेतुभ्यंनावक्ष्यंनोक्तवानस्मिनब्रूयामित्यर्थः॥भूयोप्यप्रत्ययमिवालक्ष्यप्रत्याययितुमब्रुवंसमू
लःसहमूलेनवाएषोन्यथासंतमात्मानमन्यथाकुर्वन्ननृतमयथाभूतार्थमभिवदतियःसपरिशुष्यतिशोषमुपैतीहलोकपरलोकाभ्यां
विच्छिद्यतेविनश्यतियतएवंजानेतस्मान्नार्हाम्यहमनृतंवक्तुंमूढवत्सराजपुत्रएवंप्रत्यायितस्तूष्णींव्रीडितोरथमारुह्यप्रवव्राजप्रगत
वान्यथागतमेवातोन्यायतउपसन्नाययोग्यायजानताविद्यावक्तव्यैवानृतंच

नायांकारणमित्यर्थः॥अप्रत्ययमिति॥अविश्वासमित्यर्थः॥ रामः
अन्यथासंतमिति॥ज्ञानिनंसंतंअन्यथाकुर्वन्अज्ञानिनंकुर्वन्आरोपयन्नित्यर्थः॥कथंतेनावक्ष्यमित्यनेनसूचितमर्थमाह॥अतइति॥समूलोवाइ २९

त्वनेनसूचितमाह॥अनृतंचेति॥

स्वरूपेणशल्यत्वाभावादाह॥ विज्ञेयत्वेनेति॥ यावज्जिज्ञासितंनज्ञायतेतावन्नहृदिशल्यवद्भासतइतिशल्यमिवेत्युक्तं॥ पुरुषस्यषोडशकल
त्वंनसाक्षात्सावयत्वेनकिंतुकलाजनकत्वेनतदुपाधिमत्वादितिवक्तुंयस्मिन्नेइतिवाक्यमितितत्तात्पर्यमाह॥ षोडशकलाभिरिति॥ ननुकेवल
आत्माप्रदर्श्यतांकिंवक्ष्यमाणकलोत्पत्त्येत्यतआह॥ तदुपाधीति॥ तथैवसप्रदर्शनीयइत्यत्रहेतुमाह॥ अर्थंतेति॥ अविद्याविषयाइतिअविद्याधी

नवक्तव्यंसर्वास्वप्यवस्थास्वितिसेतत्सिद्धंभवति॥ तंपुरुषंत्वात्वांएकामिममहृदिविज्ञेयत्वेनशल्यमिवमेहृदिस्थितं॥ क्वासौवर्ततेविज्ञेयःपु
रुषइतितस्मैसहोवाचइहैवांतःशरीरेहृदयपुंडरीकाकाशमध्येहेसोम्यसपुरुषोनदेशांतरेविज्ञेयोयस्मिन्नेताउच्यमानाःषोडशकलाःप्रा
णाद्याःप्रभवंत्युत्पद्यंतइतिषोडशकलाभिरुपाधिभूताभिःसकलइवनिष्कलःपुरुषोलक्ष्यतेऽविद्ययेति॥ तदुपाधिकलाध्यारोपापनयेनवि

समूलोवाएषपरिशुष्यतियोऽनृतमभिवदतितस्मान्नार्हाम्यनृतंवक्तुंसतूष्णींरथमारुह्यप्रवव्राजतंत्वाएकामिकासौपुरुषइ
तितस्मैसहोवाचेहैवांतःशरीरेसोम्यसपुरुषोयस्मिन्नेताःषोडशकलाःप्रभवंतीति॥ ययासपुरुषःकेवलोदर्शयितव्यइतिकला
नांतत्प्रभवत्वमुच्यतेप्राणादीनामत्यंतनिर्विशेषेह्यद्वयेशुद्धेतत्वेनशक्योऽध्यारोपमंतरेणप्रतिपाद्यप्रतिपादनादिव्यवहारःकर्तुमितिकला
नांप्रभवस्थित्यप्यया आरोप्यंतेऽविद्याविषयाश्चैतन्याऽव्यतिरेकेणैवहिकलाजायमानास्तिष्ठंत्यःप्रलीयमानाश्चसर्वदालक्ष्यंतेऽतएवभ्रांताःके
चिदग्निसंयोगात्घृतमिवघटाद्याकारेणचैतन्यमेवप्रतिक्षणंजायतेनश्यतीति॥ नाइत्यर्थः॥ कालत्रयेपितासांचैतन्यरूपाधिष्ठानाव्यतिरेकाद्रज्जुस
र्पवत्सृषात्वमित्यविद्याविषयत्वंसाधयति॥ चैतन्येति॥ चैतन्याव्यतिरेकेणलक्ष्यमाणत्वंहेतुंविज्ञानवादीभ्रांत्यादृढीकरोति॥ अतएवेति ॥ ७ ॥ ७ ॥

प्र.उ. घृतंयथाअग्निसंयोगाद्द्रवावस्थांप्रतिपद्यतेएवमहमाकारमालयविज्ञानमेववासनावशाद्विषयाकारेणजायतइतिवदतांतेषांभ्रमोविषयस्यचैतन्या टी.
३० व्यतिरेकेप्रत्ययंगमयति॥अन्यथातथाभ्रमानुपपत्तेरित्यर्थः॥विषयाणांचैतन्याव्यतिरेकेणप्रतीतिनियमादेवविषयविज्ञानरूपेणचैतन्याभावेसुषु
प्त्यादौशून्यभ्रमोजातःकेषांचिदितितदीयभ्रांत्यापिचैतन्याव्यतिरेकप्रतीतिंदृढीकरोति॥तन्निरोधइति॥चैतन्यस्यानित्यस्यकलारोपाधिष्ठानत्वंन
संभवतिकलाकार्यत्वादितिनैयायिकपक्षोक्तिव्याजेनशंकते॥घटादीति॥भूतधर्मइतिदेहाकारेणसंहतभूतधर्मइत्यर्थः॥चैतन्यस्यारोपाधिष्ठा
नत्वसिध्यर्थंनित्यत्वमेकत्वंचवदन्तान्निराकरोति॥अनपायेति॥प्रत्यवभासतइतिनानात्वेनकार्यत्वेनचेतिशेषः॥सत्यंज्ञानमिति॥तथाचश्रुति

तन्निरोधेशून्यमिवसर्वमित्यपरेघटादिविषयंचैतन्यंचेतयितुर्नित्यस्यात्मनोऽनित्यंजायतेविनश्यतीत्यपरे॥चैतन्यंभूतधर्मइतिलो
कायतिकाः॥अनपायोपजनधर्मकचैतन्यमात्मैवनामरूपाद्युपाधिधर्मैःप्रत्यवभासते॥सत्यंज्ञानमनंतंब्रह्म॥प्रज्ञानंब्रह्मविज्ञा
नमानंदंब्रह्म॥विज्ञानघनएवेत्यादिश्रुतिभ्यः॥स्वरूपव्यभिचारिषुपदार्थेषुचैतन्यस्याव्यभिचाराद्यथायथायोयःपदार्थोविज्ञायते
तथातथाज्ञायमानत्वादेवतस्यतस्यचैतन्यस्याव्यभिचारित्वं

विरोधात्तेपक्षाहेयाइत्यर्थः॥किंचज्ञानकालेविषयाणांसद्भावनियमाभावात्
विषयकालेचज्ञानस्यसद्भावनियमात्तयोर्भेदइतिविज्ञानवादिपक्षंनिराकुर्वन्नव्यभिचारादेवज्ञानस्यनित्यत्वंसाधयन्नैयायिकादिपक्षमपिनिरा
करोति॥स्वरूपेति॥घटज्ञानकालेघटाभावसंभवात्विषयाणांज्ञानव्यभिचारित्वंज्ञानस्यतुविषयकालेऽवश्यंभावनियमादव्यभिचारित्वमित्य
र्थः॥पटकालेघटज्ञानमपिनास्तीतिघटज्ञानस्यापिपटविषयव्यभिचारित्वंतुल्यमित्याशंक्यस्वरूपेत्युक्तंज्ञानस्यविषयविशिष्टत्वरूपेणैवव्यभि रामः
चारःविषयस्यतुस्वरूपेणैवेतिविशेषइत्यर्थः॥ज्ञानस्याव्यभिचारित्वमुपपादयति॥यथायथेति॥ननुउत्पन्नविनष्टदेर्मेरुगुहांतरवर्तिनश्चाज्ञायमा ३०

ज्ञानस्यापिज्ञेयाव्यभिचारोसिद्धइत्याशंक्यतस्याज्ञानेतत्सद्भावासिद्धेस्तथाभूतपदार्थोसिद्धइत्याह॥वस्तुनस्त्वेति॥अनुपपत्तिमेवदृष्टांतेनस्फुटीक
रोति॥रूपंचेति॥ज्ञेयस्यज्ञानव्यभिचारित्वंज्ञानकालेसत्वनियमाभावरूपंस्पष्टमित्याह॥व्यभिचरतीति॥घटज्ञानकालेकदाचित्पदाभावादित्यर्थः
॥पटकालेघटज्ञानस्यापिव्यभिचारस्तुल्यइत्याशंक्यविशिष्टरूपेणव्यभिचारेपिस्वरूपेणाव्यभिचारंपूर्ववत्स्फुटयन्नाह॥नव्यभिचरतीति॥ज्ञानमि
त्यस्यइहाप्यनुषंगः॥पूर्ववाक्येद्वितीयांतंइहतुप्रथमांतमितिविशेषः॥भावादिति॥स्वरूपेणेत्यर्थः॥ज्ञानस्यस्वरूपेणसत्तामेवज्ञेयांतरस्यज्ञेयत्वा

वस्तुतत्वंभवतिकिंचिन्नज्ञायतइतिचानुपपन्नं॥रूपंचदृश्यतेनचास्तिचक्षुरितियथाव्यभिचरतितुज्ञेयंज्ञानंनव्यभिचरतिकदाचिदपि
ज्ञेयंज्ञेयाभावेपिज्ञेयांतरेभावात्ज्ञानस्यनहिज्ञानेअसतिज्ञेयंनामभवति॥कस्यचित्सुषुप्तेअदर्शनात्॥ज्ञानस्यापिसुषुप्तेऽभावात्ज्ञेय
वत्ज्ञानस्वरूपस्यव्यभिचारइतिचेत्॥न॥ज्ञेयावभासकस्यज्ञानस्यालोकवत्ज्ञेयाभिव्यंजकत्वात्स्वव्यंग्याभावेआलोकाभावानुपपत्ति
वत्सुषुप्तेविज्ञानाभावानुपपत्तेः॥नह्यंधकारेचक्षुषारूपानुपलब्धौचक्षुषोऽभावःशक्यःकल्पयितुंवैनाशिकेन॥वैनाशिकोज्ञेयाभावे
ज्ञानाभावंकल्पयत्येवेतिचेद्येनतदभावंकल्पयेत् देवसाधयति॥नहीति॥स्वरूपेणाप्यभावंशंकते॥सुषुप्तइति॥किंतदानींज्ञेयाभावेनज्ञाना
भावःसाध्यतेउतज्ञानस्यादर्शनाद्वा॥आद्येपिज्ञेयस्यव्यंग्यत्वात्तदभावात्व्यंजकाभावइतिवाउततयोरैक्यादेकाभावेइतराभावइतिनाद्यःव्यभिचा
रादित्याह॥नज्ञेयेति॥व्यंग्यज्ञानेकल्प्यस्यव्यंग्याभावेअभावउच्यतेआलोकस्यप्रत्यक्षसिद्धत्वान्नैवमितिज्ञानानुमेयत्ववादिनंप्रतिदृष्टांतांत
रमाह॥नहीति॥वैनाशिकमतेविज्ञानव्यतिरिक्तालोकाद्यभावान्नतत्रव्यभिचारइतिशंकते॥वैनाशिकइति॥कल्पयत्येवेति॥उक्तव्यभिचा
रस्यत्वाभावेनव्यभिचाराभावादित्यर्थः॥एवमपिज्ञानाभावकल्पकस्यज्ञेयाभावस्यज्ञानमंगीक्रियतेनवा॥आद्येनज्ञानाभावसिद्धिः॥तस्यैवअभाव

२=बुद्धिपूर्वकः किलविनाशोभावानांप्रतिसंख्यानिरोधोनामभाष्यते॥ तद्विपरीतोऽप्रतिसंख्यानिरोधः॥ आवर्णाभावमात्रमाकाशमिति॥

प्र॰उ॰ येनज्ञेयाभावज्ञानेनतदभावंज्ञानाभावंकल्पयेत्तस्यज्ञानस्याभावः केनकल्पतेनकेनापिकल्पयितुंशक्यमित्यर्थः॥ नद्वितीयइत्याह॥ तदभावस्या टी॰
३१ पीति॥ ज्ञेयाभावस्यापिअज्ञातस्यज्ञानाभावकल्पकत्वासंभवात्॥ अवश्यंज्ञेयत्वात्तद्ज्ञानाभावेतदनुपपत्तेः कल्पनानुपपत्तेः ज्ञानानंगीकारपक्षोनयुक्त
इत्यर्थः॥ आद्यकोटौद्वितीयकल्पंशंकते॥ ज्ञेयेति॥ वैनाशिकमतेपिअभावस्यज्ञेयत्वाभ्युपगमात् बुद्धिबोध्यंत्रयादन्यत्संस्कृतंक्षणिकंचतदितिप्रति
संख्याप्रतिसंख्यानिरोधाकाशरूपत्रयव्यतिरिक्तस्यैवक्षणिकत्वेननिरोधशब्दितस्याभावस्यनित्यत्वांगीकारेणतदभिन्नस्यज्ञानस्यापिसुषुप्तेसत्वं
नित्यत्वंचप्राप्तमित्याह॥ नाभावस्येति॥ ज्ञानस्याभावाभिन्नत्वेनअभावत्वमेवस्यात्ननुभावत्वेनसत्वंनित्यत्वंचस्यादित्याशंक्यअभावस्यापिज्ञानाभि

तस्याभावः केनकल्प्यतइतिवक्तव्यंवैनाशिकेन॥ तदभावस्यापिज्ञेयत्वात् ज्ञानाभावेतदनुपपत्तेः॥ ज्ञानस्यज्ञेयाव्यतिरिक्तत्वात् ज्ञेयाभा
वेज्ञानाभावइतिचेन्नअभावस्यापिज्ञेयत्वाभ्युपगमात्॥ अभावोपिज्ञेयोभ्युपगम्यतेवैनाशिकैर्नित्यश्चतदव्यतिरिक्तंचेत् ज्ञानंनित्यंक
ल्पितंस्यात्॥ तदभावस्यचज्ञानात्मकत्वादभावत्वंवाङ्मात्रमेवनपरमार्थतोऽभावत्वमनित्यत्वंचज्ञानस्यनचनित्यस्यज्ञानस्याभावनाममात्रा
ध्यारोपेकिंचितनश्छिन्नं॥ अथाभावोज्ञेयोपिसन्ज्ञानव्यतिरिक्तइतिचेत्नतर्हिज्ञेयाभावेज्ञानाभावः नत्वेअभावत्वमेवनस्यादित्याह॥ तदभावस्ये

ति॥ अनित्यत्वंचज्ञानस्येतिवाङ्मात्रमेवस्यादित्यनुषंगः॥ वाङ्मात्रेणापिअभावस्यअभावत्वेनज्ञानानित्यत्वेनचअस्मत्सिद्धांतसिद्धिरित्याशंक्यनाममात्रे
णतेनवास्तवनित्यत्वादिविरोधाभावान्नास्माकंक्षतिरित्याह॥ नचेति॥ अभावनामेति॥ अनित्यनामेत्यपिद्रष्टव्यं॥ एतद्दोषपरिहारार्थंज्ञेयस्यापिसतोऽभा
वस्यज्ञानाभेदोनांगीक्रियतइतिशंकते॥ अथेति॥ तर्हिज्ञेयाभिन्नत्वेनहेतुनासुषुप्तेज्ञानाभावोनसिध्यतिघटाद्यभावेनतत् ज्ञानाभावसिद्धावपिअभाव
ज्ञानाभावासिद्धेस्तस्याभिन्नत्वाभावादित्याह॥ नतर्हीति॥ यद्वाअभावस्यज्ञेयस्यज्ञानाद्भेदेभावस्यापितथात्वंस्याद्विशेषहेत्वभावात् तथाचनज्ञेयाभावात्ज्ञा

॥ नाभावासिद्धिरित्याह॥ नतर्हीति॥
राम: ३१

ननु ज्ञेयस्य ज्ञानव्यतिरिक्तत्वमंगीक्रियते तथा च अभावस्य ज्ञानव्यतिरिक्तत्वात् अभावत्वादिकं सिद्ध्यति ज्ञानस्य तु न ज्ञेयव्यतिरिक्तत्वं॥ तथा च ज्ञेयाभा
वे ज्ञानाभावसिद्धिरिति निरुद्धगतिकः शंकते॥ ज्ञेयमिति॥ ज्ञानस्य ज्ञेयाव्यतिरेके ज्ञेयस्यापि तदव्यतिरेकावश्यंभावात् अन्यथा उभयोरत्यंतभेद एव
स्यात् भेदाभेदयोर्विरोधादनुपपत्तेरिति दूषयति॥ न शब्दमात्रत्वादिति॥ इदमुपलक्षणं ज्ञानस्याभावाव्यतिरेकेण निःसत्त्वादिकं च स्यादेवेत्यपि द्रष्टव्यं॥
यद्येतद्दोषपरिहाराय तस्यापि भेद एवांगीक्रियते तर्हि न सुषुप्तौ ज्ञानाभावसिद्धिरित्युपसंहरति॥ ज्ञेयव्यतिरेके त्विति॥ सुषुप्ते ज्ञानस्यादर्शनादेव
अभाव इत्याद्येहितीयं शंकते॥ ज्ञेयाभाव इति॥ आलयविज्ञानसंततेर्नित्यत्वांगीकारेण त्वया तदापि तदभावो वक्तुं न शक्यत इत्याह॥ न सुषुप्त इति॥ अस्ति

ज्ञेयं ज्ञानव्यतिरिक्तं न तु ज्ञानं ज्ञेयव्यतिरिक्तमिति चेन्न शब्दमात्रत्वाद्विशेषानुपपत्तेः॥ ज्ञेयज्ञानयोरेकत्वं चेदभ्युपगम्यते ज्ञेयं ज्ञान
व्यतिरिक्तं ज्ञानं ज्ञेयव्यतिरिक्तं नेति शब्दमात्रमेतत् वह्निरग्निव्यतिरिक्तोऽग्निर्नवह्निव्यतिरिक्त इत्यभ्युपगम्यते॥ ज्ञेयव्यतिरेके तु ज्ञा
नस्य ज्ञेयाभावे ज्ञानाभावानुपपत्तिः सिद्धा॥ ज्ञेयाभावेऽदर्शनादभाव ज्ञानस्येति चेत्॥ न॥ सुषुप्ते ज्ञप्त्यभ्युपगमात्॥ वैनाशिकैरभ्युपग
म्यते हि सुषुप्तेऽपि ज्ञानास्तित्वं तत्रापि ज्ञेयत्वमभ्युपगम्यते ज्ञानस्य स्वेनैवेति चेन्न॥ भेदस्य सिद्धत्वात् सिद्धं ह्यभावविज्ञेयविषयस्य ज्ञान
स्याभावज्ञेयव्यतिरेकात् ज्ञेयज्ञानयोरन्यत्वं॥

त्वमिति॥ तथा च ज्ञानस्यादर्शनमसिद्धं सुषुप्तेऽपि तदंगीकारादित्यर्थः॥ ननु ज्ञेयाभावेन तन्निरू
प्यस्य ज्ञानस्यादर्शनमित्युच्यते मया सुषुप्ते च तस्यैव स्वज्ञेयत्वात् ज्ञानदर्शनमनुपपद्यते अस्मन्मते त्वन्मते तु स्वज्ञेयत्वानंगीकारात् सुषुप्ते चान्यस्याभावा
न्निरूपकाभावान्न ज्ञानदर्शनास्तित्वमुपपद्यत इति शंकते॥ तत्रापीति॥ अभावस्थले ज्ञानज्ञेययोर्भेदस्य साधितत्वात्तद्दृष्टांतेन सर्वत्र ज्ञानज्ञेययोर्भेदसा
धनान्न स्वज्ञेयत्वं ज्ञानस्येत्याह॥ न भेदस्येति॥ अभावरूपो ज्ञेयो विषयो यस्य तस्य ज्ञानस्य अभावरूपाद्यो ज्ञेयस्तद्व्यतिरेकादित्यर्थः ॥

प्र·उ· अभावस्थलेभेदेपिनसर्वत्रैत्याशंक्यन्यायस्यतुल्यत्वान्नतदन्यथाकर्त्तुंशक्यमित्याह॥नहीति॥ज्ञानस्यस्वव्यतिरिक्तज्ञेयत्वनियमपक्षेअनवस्थांवैना टी·
३२ शिकःशंकते॥ज्ञानस्येति॥ज्ञेयस्यस्वव्यतिरिक्तज्ञेयत्वनियमांगीकारात्अस्मन्मतेचज्ञानस्यज्ञेयत्वानंगीकारान्नदोषइत्याह॥नतदिति॥सर्वस्य
वस्तुजातस्यविभागोऽसंकरःज्ञानंज्ञानमेवनज्ञेयंज्ञेयमपिज्ञेयमेवनकदाचिदपिज्ञानमित्येवंरूपस्तस्योपपत्तेरित्यर्थः॥अथवाद्विभागोपपत्तेरि
तिच्छेदः॥ज्ञानज्ञेयरूपभागद्वयमेवराशिद्वयमेवांगीक्रियतेनतृतीयोज्ञानविषयकज्ञानरूपोभावराशिरंगीक्रियतइत्यर्थः॥तामेवाह॥यदाहीति
॥यस्मिन्पक्षेज्ञेयंसर्वंस्वव्यतिरिक्तस्यकस्यचिद्ज्ञानस्यज्ञेयमित्यंगीक्रियतइतिज्ञेयपदात्स्वाव्यतिरिक्तस्येतिपदाध्याहारेणचयदाहीतिवाक्यंयोज्यं

नहितत्सिद्धंमृतमिवोज्जीवयितुंपुनरन्यथाकर्तुंशक्यंतेवैनाशिकशतैरपिज्ञानस्यज्ञेयत्वमेवेतितदप्यन्येननतदप्यन्येनेतिह्यनवस्थेति
प्रसंगइतिचेतन्नतद्विभागोपपत्तेःसर्वस्य॥यदाहिसर्वंज्ञेयंकस्यचित्तदातद्व्यतिरिक्तंज्ञानंज्ञानमेवेतिद्वितीयोविभागएवाभ्युपगम्यतेऽवै
नाशिकैः॥नतृतीयस्तद्विषयइतिअनवस्थानुपपत्तिः॥ज्ञानस्यस्वेनैवाविज्ञेयत्वेसर्वज्ञत्वहानिरितिचेत्सोपिदोषस्तस्यैवास्तु॥किंत
न्निर्वहणेनास्माकमनवस्थादोषश्च ज्ञानस्यज्ञेयत्वाभ्युपगमादवश्यंचवैनाशिकानांज्ञानंज्ञेयं॥ अवैनाशिकैरितिच्छेदः॥तद्विषयइति॥

ज्ञानविषयकज्ञानात्मकइत्यर्थः तर्हित्वत्पक्षेज्ञानात्मकस्यब्रह्मणःसर्वज्ञत्वंनस्यात्स्वेनस्वस्याज्ञानादितिशंकते॥ज्ञानस्येति॥ज्ञातुंयोग्यस्यसर्वस्या
ज्ञानेहिसर्वज्ञत्वहानिः॥अन्यथाशशविषाणादेरज्ञानात्सर्वज्ञत्वंकस्यापिमतेनस्यात्अतोनास्मन्मतेतस्यदोषस्यप्राप्तिः किंतुवैनाशिकस्यैवतेनज्ञानस्या
वश्यंज्ञेयत्वांगीकारात्स्वेनस्वस्यज्ञेयत्वस्यसिद्धंहीतिपूर्वग्रंथेदूषितत्वादन्यज्ञेयत्वस्यचानंगीकारात्॥सर्वज्ञत्वायोगादित्याह॥सोपीति॥तर्हितवमतेक रामः
थंसर्वज्ञत्वनिर्वाहइत्याशंक्यअस्मन्मतेतस्यमायिकत्वेनतदनिर्वाहेपिनदोषइत्याह॥किंतदिति॥वस्तुतस्तुसर्वस्यव्यवहारहेतुज्ञानवत्वंसर्वज्ञत्वंतत्तुज्ञान ३२

स्यापिस्वप्रकाशत्वेनस्वव्यवहारहेतुत्वादस्तिज्ञातुंयोग्यंसर्वंज्ञानाद्यातदस्तीतिभावः॥पूर्वोक्तानवस्थादोषोपितस्यैवेत्याह॥अनवस्थेति॥ननुतेनस्वेनै
वज्ञेयत्वांगीकारान्नानवस्थेत्यतआह॥स्वात्मनाचेति॥सिद्धंहीत्यत्रस्वज्ञेयत्वासंभवस्योक्तत्वात्परिशेषादन्यज्ञेयत्वेतस्यतस्याप्येवमित्यनवस्थाऽनिवा
र्येत्यर्थः॥ज्ञानस्याज्ञेयत्वेतद्व्यवहारासिद्धिःज्ञानांतरज्ञेयत्वेचानवस्थातत्वापिस्यादितिशंकते॥समानएवेति॥स्वप्रकाशत्वेनस्वव्यवहारसिद्धेःज्ञानभे
दस्यैवास्माभिरनंगीकारात्अनवस्थायाःप्रसक्तिरेवनास्तीतिपरिहरति॥नज्ञानस्येति॥एकत्वपक्षेभेदप्रतीतिमुपपादयति॥नामरूपेति॥एवंचचै
तन्यस्यैकत्वेननित्यत्वात्जगद्भिन्नत्वेनतस्यसत्यत्वाच्चअधिष्ठानत्वोपपत्तेः॥तस्मिन्कलानामध्यारोपआत्मप्रतिपत्त्यर्थमिहोच्यतइत्याह॥तथाचेहेति

स्वात्मनाचाविज्ञेयत्वेनानवस्थाऽनिवार्यासमानएवायंदोषइतिचेन्न॥ज्ञानस्यैकत्वोपपत्तेःसर्वदेशकालपुरुषाद्यवस्थमेकमेवज्ञानंनाम
रूपाद्यनेकोपाधिभेदात्सवित्रादिजलादिप्रतिबिंबवदनेकधाऽवभासतइतिनासौदोषः॥तथाचेहेदमुच्यते॥ननुश्रुतेरिहैवांतःशरीरेपरि
छिन्नःकुंडबदरवत्पुरुषइति॥नप्राणादिकलाकारणत्वात्॥नहिशरीरमात्रपरिछिन्नस्यप्राणश्रद्धादीनांकलानांकारणत्वंप्रतिपत्तुंश
क्यात्॥कलाकार्यत्वाच्चशरीरस्यनहिपुरुषकार्याणांकलानांकार्यंसच्छरीरंकारणकारणंस्वस्यपुरुषंकुंडबदरमिवाभ्यंतरीकुर्यात्बीज
वृक्षादिवत्स्यादितिचेद्यथा

॥चैतन्यस्यनित्यत्वेनाऽधिष्ठानत्वेसतिइहश्रुतौइदंकलानामध्यारोपणमुच्यतइत्यर्थः॥ननुचैतन्यस्यननित्यत्वंपरिछे
दश्रुतेःपरिछिन्नस्यचघटादिवदनित्यत्वादितिशंकते॥नन्विति॥शरीरांतस्थत्वंप्रत्यक्त्वविवक्षयोच्यतेनपरिछेदविवक्षयातथासतिउत्तरवाक्य
विरोधादित्याह॥नेति॥अयोग्यत्वादपिसोर्थोनविवक्षितइत्याह॥कलेति॥स्वोत्पत्तेःपूर्वंस्वस्याभावात्तत्कालीनपुरुषंपरिछेत्तुंनशक्नोतीत्यर्थः॥
बीजकार्यस्यवृक्षस्यकार्यंफलंसकारणवृक्षकारणंबीजमभ्यंतरीकरोतीतिदृष्टमितिनायोग्यत्वमितिशंकते॥बीजवदिति॥तद्धिरगोति॥यथेति॥

प्र.उ. दृष्टांतेबीजव्यक्तिभेदादविरोधेपिइहपुरुषव्यक्तैक्यात्कारणत्वाभ्यं तरीभावयोर्विरोधइत्याह॥नेति॥ननुकारणीभूतबीजस्यैववृक्षफलत टी.
३३ दंतर्गतबीजरूपेणपरिणामात्तयोःकारणकार्यबीजयोरैक्यमाशंक्यएवमपितस्यसावयवत्वाद्वृक्षवत्फलाकारेणपरिणतावयवेभ्योभि
न्नावयवानामेवतदंतर्गतबीजरूपेणपरिणामात्तयोर्भेदेनआधाराधेयभावःस्यादिहतुनिरवयवत्वान्नतथात्वमित्याह॥सावयवत्वाच्चेति
॥आद्यहेतुंविवृणोति॥दृष्टांतइति॥श्रूयतइति॥यस्मिन्नेताःषोडशकलाइतियच्छब्दोक्तस्यैवपुरुषस्यांतःशरीरेसोम्यसपुरुषइतितच्छब्देना
भिधानादित्यर्थः॥द्वितीयहेतुंविवृणोति॥बीजेति॥निरवयवश्चेति॥तथाचएकदेशेनकलादिरूपेणपरिणामएकदेशेनतत्रावस्थानंबीजवन्नसं

बीजकार्यंवृक्षस्तत्कार्यंचफलंस्वकारणकारणंबीजमभ्यंतरीकरोत्यास्रादितद्वत्पुरुषमभ्यंतरीकुर्याच्छरीरंस्वकारणकारणमपीति
चेन्न॥अन्यत्वात्सावयवत्वाच्च॥दृष्टांतेकारणाद्बीजाद्वृक्षफलसंवृत्तान्यन्यान्येवबीजानि॥दार्ष्टांतिकेतुस्वकारणकारणभूतःसएवपुरु
षःशरीरेभ्यंतरीकृतःश्रूयते॥बीजवृक्षादीनांसावयवत्वाच्चस्यादाधाराधेयत्वं॥निरवयवश्चपुरुषःसावयवाश्चकलाःशरीरंचैतेनाका
शस्यापिशरीराधारत्वमनुपपन्नं॥किमुताकाशकारणस्यपुरुषस्यतस्मादसमानोदृष्टांतः॥किंदृष्टांतेनवचनात्स्यादितिचेन्न॥वचनस्या
कारकत्वात्॥नहिवचनंवस्तुनोन्यथाकरणेव्याप्रियते॥ भवतीत्यर्थः॥किंचकलानांसावयवत्वेनपरिच्छेदात्पुरुषस्यतद्विपरीतत्वादपरिछिन्नस
नपरिछिन्नाधारकत्वंसंभवतीत्याह॥सावयवाश्चेति॥यद्वासावयवत्वेनकार्यत्तयामृषात्वान्निरवयवतयापरमार्थसत्यपुरुषाधारत्वंनोपपद्यतइ
त्याह॥सावयवाश्चेति॥नन्वाकाशकार्येशरीरेआकाशस्यापरिछिन्नस्याभ्यंतरीभावोदृष्टइत्याशंक्यतस्यापिशरीराकारेणावस्थानमेवछिद्रादिविशि रामः
ष्टस्यैवशरीरत्वान्नतुतदंतस्थत्वमित्याह॥एतेनेति॥उक्तस्यसहमपिवचनप्रामाण्यादंगीकार्यमितिशंकते॥किंदृष्टांतेनेति॥ ७ ॥ ७ ॥ ७ ॥ ३३

वचनस्यापिवस्तुनोऽन्यथाकरणेसामर्थ्याभावात्वस्तुस्वरूपाविरोधेनैवबोधकत्वादन्यथाविचारवैयर्थ्यादिरुद्धार्थोनबोधार्हइत्याह॥वचनस्येति
॥तर्हिअंतःशरीरइतिश्रुतेःकथमुपपत्तिरित्याशंक्यपुरुषस्यशरीरोपादानत्वेनतदनुस्यूतस्यतदंतर्गतत्ववत्प्रतीतेस्तदभिप्रायेयंश्रुतिरितिदृष्टांत
माह॥तस्मादिति॥अंडेति॥अंडकारणस्यव्योम्नोयथातदनुस्यूतत्वेनतदंतर्गतत्वप्रतीतिःतद्वदित्यर्थः॥यद्वालोकभ्रमसिद्धंपरिछिन्नत्वमनूद्य
तेश्रुत्येत्याह॥उपलब्धीति॥तत्राभिव्यक्तेर्वातदंतर्गतत्वव्यपदेशइत्याह॥उपलभ्यतेचेति॥ननुयस्मिन्नेताःषोडशकलाःप्रभवंतीतिअनेना

किंतर्हियथाभूतार्थावद्योतने॥तस्मादंतःशरीरइत्येतद्वचनमंडस्यांतर्व्योमेतिवद्द्रष्टव्यंउपलब्धिनिमित्तत्वाच्चदर्शनश्रवणमनन
विज्ञानादिलिंगैरंतःशरीरेपरिछिन्नइवह्युपलभ्यतेपुरुषउपलभ्यतेद्राऽतउच्यतेंऽतःशरीरेसोम्यसपुरुषइति॥नपुनराकाशकारणः
सन्कुंडबदरवच्छरीरपरिछिन्नइतिमनसापीछतिवक्तुंमूढोपिकिमुतप्रमाणभूताश्रुतिः॥यस्मिन्नेताःषोडशकलाःप्रभवंतीत्युक्तंपु
रुषविशेषणार्थंकलानांप्रभवःसचान्यार्थोपिश्रुतःकेनक्रमेणस्यादित्यतइदमुच्यते॥चेतनपूर्विकाचसृष्टिरित्येवमर्थंचपुरुषःषोडश
कलःपृष्टोयोभारद्वाजेनसईक्षांचक्रेईक्षणंदर्शनंचक्रेकृतवानित्यर्थः॥सृष्टिफलक्रमादिविषयंकथमित्युच्यते॥कस्मिन्कर्तृविशेषेदे
हादुत्क्रांतउत्क्रांतोभविष्याम्यहमेवकस्मिन्वाशरीरेप्रतिष्ठिते
ध्यारोपस्योक्तत्वात्सईक्षामित्यादिनापुनःसृष्टिकथनमधिकमित्यतआह॥
यस्मिन्निति॥अतइति॥क्रमप्रतिपत्त्यर्थंसईक्षामित्याद्युच्यतइत्यर्थः॥तत्प्रतिपत्तिश्चकलोत्पत्तिप्रतिपत्तिसौकर्यार्थंविपर्ययेणतुक्रमोतउपपद्य
तेचेतिन्यायेनकार्यस्यस्वस्वकारणक्रमेणापवादसौकर्यार्थंचेत्यर्थः॥ईक्षणोक्तेःप्रयोजनमाह॥चेतनेति॥सृष्टिरिति॥सृष्टिःप्राणादेःसृष्टिस्तस्याःउ
त्क्रांत्यादिफलंक्रमःप्राणाक्रूत्स्यामित्याद्युक्तानंतर्यमादिशब्देनलोकेषुनामचेत्याधाराधेयविशेषोगृह्यते॥नन्वीक्षणोक्त्यानचेतनपूर्वकत्वसिद्धिःन्या

प्र·उ· विक्रियावत्वेन हेतुत्वे च सति दृश्यक्षणस्यान्यथानेपत्तादिति सांख्यः शंकते॥ नन्वात्मेति॥ अकर्तृत्वस्य तत्रेदमित्यनेनान्वयः॥ आत्मा अकर्तातत्र तथा स टी·
३४ तिइदं कर्तृत्ववचनमनुपपन्नमित्यर्थः॥ किंच तस्य कर्तृत्वांगीकारेपि कर्तुः कुलालादेरिव सहकारिसाधनांतराभावादात्मनो दुःखाद्यनर्थहेतुप्राणा
दिसंसारकर्तृत्वानुपपत्तेश्चानुपपन्नं स्रष्टृत्ववचनमित्याह॥ आत्मनोपीति॥ कर्तृत्वेपीत्यपिशब्दान्वयः तर्हि किं कर्तृ अत आह॥ प्रधानमिति॥ कर्त्रिति॥
क्रियाशक्तिमत् अतः प्रवर्त्तत इत्यन्वयः॥ ननु प्रधानस्याचेतनस्य प्रयोजनापेक्षाभावात् प्रवृत्त्यनुपपत्तिरित्यत आह॥ पुरुषार्थमिति॥ पुरुषस्य चेतन

ऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्यामित्यर्थः॥ नन्वात्मा अकर्ता आत्मनोपि प्रधानं कर्तृ अतः पुरुषार्थं प्रयोजनमुररीकृत्य प्रधानं प्रवर्तते महदा
द्याकारेण तत्रेदमनुपपन्नं पुरुषस्य स्वातंत्र्येणेक्षापूर्वकं कर्तृत्ववचनं॥ सत्वादिगुणसाम्ये प्रधाने प्रमाणोपपन्नेस्तु इति कर्तरि सती सरेका

सईक्षां चक्रे कस्मिन्न्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति॥

नुवर्तिषु वा परमाणुषु सत्सु आत्मनश्चैकत्वेन कर्तृत्वे साधनाभावादात्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च॥ नहि चेतनावान्बुद्धिपूर्वकार्या
त्मनोऽनर्थं कुर्यात् तस्मात्पुरुषार्थेन प्रयोजनेनेईक्षापूर्वकमिव नियतक्रमेण प्रवर्तमाने स्वभोगापवर्गरूपमर्थं प्रयोजनमुद्दिश्य प्रवर्तते वत्स
विवृद्ध्यर्थमचेतनस्य धेनुदेहगतक्षीरस्य सस्यादिविवृद्ध्यर्थमंबुनश्चाचेतनस्य प्रवृत्तिदर्शनादित्यर्थः॥ ननु प्रधानस्याप्येकत्वेन सहकार्यभावात्कार
णत्वानुपपत्तौ अगत्या चेतनस्यैव कथंचित्कर्तृत्वं वाच्यमित्यत आह॥ सत्वादीति॥ सत्वादिगुणत्रयस्य साम्यावस्था प्रधानमिति सांख्यमतं तत्र सत्वादिगु राम:
णैरनेकात्मके प्रधाने कारणे सति पुरुषस्य कर्तृत्ववचनमगतेरभावादनुपपन्नमित्यन्वयः यदि चेतनानधिष्ठितस्याचेतनस्य प्रवृत्तिर्न दृष्टेति मन्यसे तर्हि ३४

अत्रापिसत्त्विस्यस्यानुपपन्नमितिपूर्वेणान्वयः॥तर्हिईक्षणश्रवणस्यकागतिरतआह॥तस्मादिति॥पुरुषार्थेनेति॥पुरुषस्यभोगापवर्गार्थेनेत्यर्थः॥
मुख्येईक्षितरि विद्यमानेननियतक्रमेणप्रवर्तमानत्वेनगुणेनयोगादेक्षतेतिगौणःप्रयोगः॥माणवकेपिंगलत्वगुणयोगेनअग्निशब्दप्रयोगवदि
त्यर्थः॥नन्वेवमपिईक्षितरिप्रधानेपुरुषशब्दःकथमतआह॥यथाराज्ञइति॥तद्वदिति॥पुरुषस्यभोगापवर्गकारिणिप्रधानेपुरुषशब्दऔप
चारिकइत्यर्थः॥सतोःकर्तुरप्यात्मनःमायोपाधिककर्तृत्वंसंभवतीतिहृदिनिधायप्रथममापाततःप्रतिबंद्यापरिहरति॥नेति॥बुद्धिःकर्त्री
भोक्तापुरुषइतिवदद्भिःसांख्यैरात्मनोभोक्तृत्वमुक्तमित्यर्थः॥श्रुतिप्रामाण्यादिति॥श्रुत्युक्तंजगत्कर्तृत्वमविकारिणोपिकथंचिन्निर्वाह्यमित्य

ऽचेतनेप्रधानेचेतनवदुपचारोयंसईक्षांचक्रेइत्यादि॥यथाराज्ञःसर्वार्थकारिणिभृत्येराजेतितद्वदात्मनोभोक्तृत्ववत्कर्तृत्वोपपत्तेःय
थासांख्यस्यचिन्मात्रस्यापरिणामिनोपिआत्मनोभोक्तृत्वंतद्वद्वेदवादिनामोक्षादिपूर्वकंजगत्कर्तृत्वमुपपन्नंश्रुतिप्रामाण्यात्तत्वांत
रपरिणामोआत्मनोऽनित्यत्वाऽशुद्धत्वाऽनेकत्वनिमित्तःनचिन्मात्रस्वरूपविक्रियातःपुरुषस्यस्वात्मन्येवभोक्तृत्वेचिन्मात्रस्वरूपविक्रि
यानदोषाय॥भवतांपुनर्वेदवादिनांसृष्टिकर्तृत्वेनतत्वांतरपरिणामएवेत्यात्मनोऽनित्यत्वादिसर्वदोषप्रसंगइतिचेन्न॥एकस्याप्यात्म
नोऽविद्याकृतनामरूपोपाध्यनुपाधिकृतविशेषाभ्युपगमात र्थः॥सांख्यःप्रतिबंदिपरिहारंशंकते॥तत्वांतरेति॥भोगोनामसुखानुभवःस
चपुरुषस्यस्वरूपभूतइतिनतत्वांतरापत्तिलक्षणपरिणामइत्यर्थः॥परिणामोहिपूर्वरूपपरित्यागेनरूपांतरापत्तिःसाचसजातीयरूपांतराप
त्तौविजातीयरूपांतरापत्तौवाअनित्यत्वादिकमावहेदेवेतिभोज्याविवेकोपाधिकंभोक्तृत्वमंगीकर्तव्यंतेनतदात्मककर्तृत्वेपितुल्यमित्यभिप्रेत्यमु
ख्यपरिहारमाह॥नेति॥एकस्यवस्तुनोऽसहायस्याकर्तुंराप्तकामस्यापीत्यपेरर्थः॥उपाधिकृतकर्तृत्वसंभवाददविद्यारूपसहायस्यसंभवात्भ्रांत्या

स्वस्माद्भिन्नजीवानामनाप्तकामानांसंभवात्पुरुषा

र्थार्थस्यस्फुटत्वंतथाविधस्याप्युपपद्यतइतिनाचेतनस्यचेतनानधिष्ठितस्यतद्युक्तमितिभावः॥नामरूपेति॥अनभिव्यक्तनामरूपेत्यर्थः॥बंधमोक्षादी
त्यादिशब्देनतत्साधनमुच्यतेमोक्षस्यापिबंधप्रतियोगित्वेनसोपाधिकत्वमुक्तंपरमार्थस्यस्फुटस्यैकगम्यत्वमाह॥सर्वेति॥एवंभूतस्यात्मनोन
स्फुटत्वमित्याह॥नतत्रेति॥कल्पयित्वेति॥कल्पयितुंप्रवृत्ताइत्यर्थः॥पुरुषस्यनिर्विशेषत्वेनतस्मिन्वस्तुतःकर्तृत्वाद्ययोगात्तदारोपितमेवे
तिकल्पयितुंप्रवृत्ताअपिसर्वविरोधनिरासकागमप्रमाणैकशरणत्वाभावात्प्रत्यक्षादिविरोधापत्त्याआरोपितत्वांगीकाराच्चत्रस्यंतःसर्वपरमा

अविद्याकृतनामरूपोपाधिकृतोहिविशेषोऽभ्युपगम्यते॥आत्मनोबंधमोक्षादिशास्त्रकृतसंव्यवहारायपरमार्थतोऽनुपाधिकृतंचतत्त्व
मेकमेवाद्वितीयमुपादेयंसर्वतार्किकबुद्ध्यनवगाह्यमभयंशिवमिष्यते॥नतत्रकर्तृत्वंभोक्तृत्वंवाक्रियाकारकफलंचस्यात् अद्वैतत्वात्स
र्वभावानां॥सांख्यास्त्वविद्याध्यारोपितमेवपुरुषेकर्तृत्वंक्रियाकारकंफलंचेतिकल्पयित्वाऽगमबाह्यत्वात्पुनस्ततस्त्रस्यंतःपरमार्थत
एवभोक्तृत्वंपुरुषस्येच्छंति॥तत्वांतरंचप्रधानंपुरुषात्परमार्थवस्तुभूतमेवकल्पयंतोऽन्यतार्किककृतबुद्धिविषयाःसंतोविहन्यंते॥तथे
तरेतार्किकाःसांख्यैरित्येवंपरस्परविरुद्धार्थकल्पनातआमिषार्थिनइवप्राणिनोऽन्योन्यविरुद्धमानार्थदर्शित्वात्परमार्थतत्वाद्दूरमेवाऽ
पकृष्यंते॥अतस्तन्मतमनादृत्यवेदांतार्थतत्वमेकत्वदर्शनंप्रत्यादरवंतोमुमुक्षवःस्युरितितार्किकमतेदोषप्रदर्शनंकिंचिदुच्यते यतएवेच्छंति

तत्रापिअचेतनस्यभोक्तृत्वायोगात्तन्मात्रमात्मनोंगीकुर्वंतिकर्तृत्वादिकंतुप्रधानस्यांगीकुर्वंतीत्यर्थः॥तर्हितस्यकोदोषइत्याशंक्यभोक्तृत्वांगीकारेतथैव
तस्यैवकर्तृत्वमपिस्यादित्यन्यैःशिक्षिताःसंतःस्वमतात्प्रच्यवंतइत्याह॥अन्यैति॥कृतायाःशिक्षितायाःबुद्धेःविषयाअधीनाःशिक्षितबुद्धयइत्यर्थः॥तर्हिसां
ख्यशिक्षकस्यतार्किकस्यमतंग्राह्यमतआह॥तथेति॥तस्यापिसांख्येनशिक्षितत्वात्तदपिग्राह्यमित्यर्थः॥तर्हिकस्यतार्किकस्यमतंग्राह्यमित्याशंक्यनक
द्वि२

तर्हि त्वया तार्किकमतं किमर्थं दूष्यते परस्परमेव तैर्दूषितत्वात्तत्त्वत्तदेवद्वेषादिमत्त्वप्रसंगाच्चेत्यत आह ॥ अत इति ॥ विरोधोद्भवकारणमिति ॥ पारमा
र्थिकतया ऽभेददर्शनमित्यर्थः ॥ संरक्षितेति ॥ भेददर्शनस्य परस्परोक्तदोषग्रस्तत्वाददैतमेव निर्दुष्टमिति निश्चितबुद्धिः सन्निर्वाति सर्वविकल्पेभ्यः
उपशांतो भवतीत्यर्थः ॥ दोषप्रदर्शनं किं चिक्रियत इति यदुक्तं तदेव प्रपंचयन् कर्तृत्वादेरारोपितत्वमेव परेणापि वक्तव्यमित्याह ॥ किंचेत्यादिना ॥ त
त्रादौ भोक्तृत्वकर्तृत्वयोर्विशेषस्य वक्तुमशक्यत्वात्तयोराश्रयव्यवस्थानसंभवतीत्याह ॥ भोक्तृत्वेति ॥ आशयमविद्वान् शंकावसरोक्तं विशेषं शंकते ॥ न
न्विति ॥ स्वात्मस्थो विक्रियत इति ॥ चिद्रूपेण विक्रियत इत्यर्थः ॥ तत्त्वांतरेति ॥ अनेकत्वाशुध्यादियुक्तस्य विलक्षणमहदादिरूपेणेत्यर्थः ॥ पुरुषस्य चिद्रूपे
ऽस्माभिः न तु तार्किकवत्तात्पर्येण ॥ तथैतदत्रोक्तं ॥ विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणं ॥ तैः संरक्षितसद्बुद्धिः सुखं निर्वाति वेदवित्
॥ किंच ॥ भोक्तृत्वकर्तृत्वयोर्विक्रिययोर्विशेषानुपपत्तिः ॥ का नाम ऽसौ कर्तृत्वाज्जात्यंतरभूता भोक्तृत्वविशिष्टा विक्रिया ॥ यतो भोक्तैव पु तं
रुषः कल्प्यते न कर्ता प्रधानं तु कर्त्रेव न भोक्त्रिति ॥ ननूक्तं पुरुषश्चिन्मात्र एव स च स्वात्मस्थो विक्रियते भुंजानो न तत्त्वांतरपरिणामेन ॥ प्रधा
नं तु तत्त्वांतरपरिणामेन विक्रियते ऽतो ऽनेकमशुद्धमचेतनं चेत्यादिधर्मवत्तद्विपरीतः पुरुषः ॥ नासौ विशेषः ॥ वाङ्मात्रत्वात् ॥ प्राग्भो
गोत्पत्तेः केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्वं नाम विशेषो भोगोत्पत्तिकाले चेज्जायते निवृत्ते च भोगे पुनस्तद्विशेषादपेतश्चिन्मात्र एव भव
तीति चेत् ॥ महदाद्याकारेण च परिणम्य प्रधानं ततो णैव परिणामान्न रूपांतरापत्तिः ॥ अशुध्यादिकं वा प्रधानस्य तु आकारांतरेण परिणामात् पू
र्वरूपत्यागादशुध्यादिकं स्यादित्यर्थः ॥ किं चिद्रूपेण परिणाम आगंतुको वा न वा ॥ आद्ये आगंतुकविशेषवत्वेन अनित्यत्वाद्यापत्त्या प्रधानाद्विशेषः ॥ भो
गानंतरं पुनः स्वरूपावस्थानान्नानित्यत्वादिदोषश्चेत्प्रधानस्यापि प्रलये तथात्वांगीकारान्न तयोर्विशेषः स्यादिति दूषयति ॥ नासाविति ॥

प्र·उ· संग्रहवाक्यंविवृणोति॥प्रागिति॥अस्यांकल्पनायामिति॥चिद्रूपेणतत्त्वांतररूपेणविक्रियाकल्पनायामपिविचार्यमाणेअर्थतोनकश्चिदपिविशे टी·
३६ षोलभ्यतइतितयोर्विशिष्टाविक्रियेतिवाङ्मात्रेणैवकल्प्यतेउच्यतइत्यर्थः॥द्वितीयंशंकते॥अथेति॥चिन्मात्रएवेति॥नत्वागंतुकंरूपांतरमित्य
र्थः॥तर्हिकिंकर्मजन्यःकादाचित्कोभोगोनसिद्ध्येदित्याह॥नतर्हीति॥एतद्दोषपरिहारायआगंतुकंपरिणाममंगीकृत्यभोगकालीनविक्रियामात्रं
भोगःसचपुरुषस्यैवनप्रधानस्येतिभोगसद्सत्त्वविशेषमात्रेणशंकते॥भोगकालेति॥तत्रापिकिंभोगकालीनविक्रियामात्रंभोगःउततत्कालीन
चिन्मात्रगतविक्रियाभोगइतिविकल्प्याऽद्येभोगकालेप्रधानस्यापिसुखाद्याकारेणविक्रियावत्त्वात्भोगःस्यादित्याह॥नेति॥द्वितीयंशंकते॥चि

ऽपेत्यपुनःप्रधानंस्वरूपेणावतिष्ठतइत्यस्यांकल्पनायांनकश्चिद्विशेषइतिवाङ्मात्रेणप्रधानपुरुषयोर्विशिष्टविक्रियाकल्प्यते॥अथ
भोगकालेपिचिन्मात्रएवप्राग्वत्पुरुषइतिचेन्नतर्हिपरमार्थतोभोगःपुरुषस्य॥भोगकालेचिन्मात्रस्यविक्रियापरमार्थैवतेनभोगः
पुरुषस्येतिचेन्न॥प्रधानस्यापिभोगकालेविक्रियावत्त्वाद्भोक्तृत्वप्रसंगः॥चिन्मात्रस्यैवविक्रियाभोक्तृत्वमितिचेदौष्ण्याद्यसाधारणधर्म
वतामग्न्यादीनामभोक्तृत्वेहेत्वनुपपत्तिः॥प्रधानपुरुषयोर्द्वयोर्युगपद्भोक्तृत्वमितिचेन्न॥ मात्रस्यैवेतिचिन्मात्रस्यैवविक्रियेत्येवकारेणधर्म्यंत

रगतविक्रियानपेक्षाचैतन्यनिक्रियाभोगइत्युच्यतेवाचैतन्यमात्रगतातद्साधारणाविक्रियाभोगइतिवानाद्यःसुखादिरूपप्रधानविक्रियांविना
भोगासिद्धेः॥नद्वितीयःचैतन्यासाधारणविक्रियैवभोगइत्यत्रहेत्वभावात्स्वासाधारणविक्रियाभोगइतिवक्तव्यं॥तथाचअतिप्रसंगः॥सर्वस्या हरि
पिस्वासाधारणविक्रियावत्त्वात्॥भोगकालीनासाधारणविक्रियावत्त्वंतुप्रधानस्याप्यस्तितत्कालीनसुखादिविक्रियावत्त्वादितिदूषयति॥औष्ण्ये रामः
ति॥ननुभोगकालीनासाधारणविक्रियैवभोगः॥नचाग्न्यादेस्तत्कालेनियमेनविक्रियास्ति॥नचप्रधानस्यापिप्रसंगइष्टापत्तिरितिशंकते॥प्रधा ३६

भोक्ता हि शेषी उभयोरपि भोक्तृत्वे शेषशेषिभावो न स्यादित्याह॥ नेति॥ ननु भोगः सत्वगुणप्रधानचेतोरूपेण परिणतप्रकृतेरेव धर्मः॥ तस्याः विक्रि
योपपत्तेः न पुरुषस्य तस्य अविक्रियत्वात् न च तस्य भोगाभावप्रसंगः तस्य तथाविधचित्तप्रतिबिंबितत्वमात्रेण भोक्तृत्वव्यपदेश इति शंकते॥ भोगध
र्मवतीति॥ सत्वांगिनीति॥ सत्वगुणः अंगी प्रधानं यस्य तस्मिन् चेतसीत्यर्थः॥ तर्हि चित्तगतभोगेन चैतन्ये विशेषो जायते न वेति विकल्प्य न द्वितीय
इत्याह॥ नेति॥ किं चास्मिन् पक्षे स्वकीयशास्त्रप्रणयनं चव्यर्थं स्यादित्याह॥ भोगरूपश्चेदिति॥ आद्ये स विशेषः सत्यो वा असत्यो वा इति विकल्प्य सत्यवि

प्रधानस्य पारार्थ्यानुपपत्तेः न हि भोक्त्रोर्द्वयोरितरेतरगुणप्रधानभाव उपपद्यते प्रकाशयोरिवेतरेतरप्रकाशने भोगधर्मवति सति सत्वांगि
नि चेतसि पुरुषस्य चैतन्यप्रतिबिंबोदयोऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेन्न॥ पुरुषस्य विशेषाभावे भोक्तृत्वकल्पनानर्थक्यात्॥ भो
गरूपश्चेदनर्थः पुरुषस्य नास्ति सदा निर्विशेषत्वात् पुरुषस्य कस्यापनयनार्थं मोक्षसाधनशास्त्रं प्रणीयते॥ अविद्याध्यारोपितानर्थापन
यायशास्त्रप्रणयनमिति चेत्परमार्थतः पुरुषो भोक्तैव न कर्ता प्रधानं कर्त्रेव न भोक्तृ परमार्थसद्वस्त्वंतरं पुरुषाच्चेयं कल्पनाऽऽगमबाह्या व्य
र्था निर्हेतुका चेति नादर्तव्या मुमुक्षुभिः॥ एकत्वेपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेन्न॥ शेषवत्वे पुरुषस्य विकारित्वं स्यादिति मनसि निधायाध्या
रोपितविशेषवत्वमस्त्वित्याद्यं शंकते॥ अविद्येति॥ अनर्थ इति भोगरूप इत्यर्थः॥ तर्हि भोक्तृत्वविशेषवत्कर्तृत्वादिविशेषस्य प्रधानादेश्चारोपवत्वमेवांगीकर्तु
युक्तं नार्धवैशसं अस्मदुक्तरीत्या बंधमोक्षव्यवहारसिद्ध्युपपत्तेस्तथा कल्पनायां प्रयोजनाभावात् प्रमाणाभावात् वस्तुतः सर्वश्रुतिविरोधापत्तेश्चेत्याह॥ परमा
र्थत इति॥ पुरुषाद्वस्त्वंतरं च प्रधानमित्यन्वयः उक्तदोषजातं सांख्यस्य मतं मोक्षकामिना नादर्तव्यमिति ज्ञापनार्थमुक्तं न तु द्वेषपक्षपातादित्याशयेनाह
॥ इति नादर्तव्येति॥ आत्मैकत्वपक्षेपि निरसनीयबंधाभावात् शास्त्रप्रणयनानर्थक्यं इति शंकते॥ एकत्वेपीति ॥ ७ ॥ ७ ॥ ७॥ ७ ॥ ॥

प्र.उ. क्रिमात्मैकत्वनिश्चयवंतंप्रतितस्यानर्थकमुच्यतेनेतद्विपरीतंप्रतिवेतिविकल्प्यआद्यंप्रतिप्रणयनाभावादानर्थक्यदोषाभावमाह॥नाभावादिति॥ टी
३७ दोषापादनाभावादित्यर्थः॥संग्रहवाक्यंविवृणोति॥आत्मैकत्वइति॥निश्चितइतिशेषः॥तदभावेशास्त्रप्रणेत्राद्यभावेइयंकल्पनैवअर्थवदनर्थकं
चेतिविकल्पनैवानुपपन्नेत्यर्थः॥नैवानुपपन्नेतिपाठेतुतदभावइत्यनेनएकत्वनिश्चयाभावोभिधीयतेतदानींनिरसनीयबंधादिसत्वात्इयंकल्पना
बंधनिरसनार्थंशास्त्रप्रणयनकल्पनानानुपपन्नेतियोज्यं॥किंचात्मैकत्वनिश्चयेजातेतन्निश्चयजनकत्वेनशास्त्रार्थवत्वस्यस्वानुभवसिद्धत्वात्तेने
यंशंकाकर्तुमपिनशक्येत्याह॥अभ्युपगतइति॥प्रमाणार्थइति॥प्रमाणस्यशास्त्रस्यार्थःप्रयोजनमित्यर्थः॥एकत्वनिश्चयवंतंप्रतिशास्त्रानर्थ

अभावात्तत्त्वहिशास्त्रप्रणेत्रादिषुतत्फलार्थिषुचशास्त्रस्यप्रणयनमनर्थकंसार्थकंवेतिविकल्पनास्यात्॥नह्यात्मैकत्वेशास्त्रप्रणेत्राद
यस्ततोभिन्नाःसंति॥तदभावेएवंविकल्पनैवानुपपन्ना॥अभ्युपगतेआत्मैकत्वेप्रमाणार्थश्चाभ्युपगतोभवतीयत्आत्मैकत्वमभ्युपगच्छ
ता॥तदभ्युपगमेचविकल्पानुपपत्तिमाहशास्त्रं॥यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिशास्त्रप्रणयनाद्युपपत्तिंचाहान्यत्र
परमार्थवस्तुस्वरूपादविद्याविषये॥यत्रहिद्वैतमिवभवतिइत्यादिविस्तरशोवाजसनेयके॥अत्रचविभक्तेविद्याःविद्येपरापरेइत्यादा
वेवशास्त्रस्यातोनन्ताःकिंकचाटभटप्रवेशोवेदांत

क्यकल्पनाभावःश्रुत्याप्युक्तइत्याह॥तदभ्युपगमेचेति॥अत्राभ्युपगमोनिश्चयःएकत्व
निश्चयाभावदशायांतुनिरसनीयारोपितबंधसत्वान्नानर्थक्यंतदपिश्रुत्योक्तमित्याह॥शास्त्रप्रणयनेति॥अनेनद्वितीयकल्पोनिरस्तः॥श्रुतिग
तयत्रशब्दंव्याचष्टे॥अन्यत्रेति॥अथर्वणीयमंत्रोपनिषदिद्वेविद्येवेदितव्येइत्युपक्रम्यअपरविद्याऋग्वेदादिरूपापराणुदृश्यत्वादिप्रत्यस्तमि रामः
तसर्वद्वैतवस्तुविषयेत्युक्त्वाविद्याविद्ययोर्विषयभेदःशास्त्रस्यादावेवसूचितइत्याह॥अत्रचेति॥अद्वैतवादेसर्वाशंकानांश्रुतिप्रामाण्येनैवनिरासात् ३७

तार्किकोपेक्षितशंकाशंकस्यापिनात्रप्रवेशइत्युपसंहरति॥ अतइति॥ राजप्रमाणेति॥ प्रमाणराजेत्यर्थः॥ राजदंतादित्वात्परनिपातः॥ वेदांतप्रमा
णमेवराजेवराजाततबाह्व: तदुक्तन्यायाःतैर्गुप्तआत्मैकत्वमेवविषयइवदेशइवदेशोरक्षणीयत्वात्सतार्किकभटैर्योधैर्नप्रवेश्यइत्यन्वयः॥ पूर्ववाद्यु
क्तंदोषंनिराकरोति॥ एतेनेति॥ उपाधिकृताअनेकाःशक्तयःसाधनानिचतत्कृतस्यभेदस्यानेकत्वस्यसत्वादित्यर्थः॥ आत्मेति॥ आत्मनोयोऽनर्थःसं
सारःतत्कर्तृत्वमित्यर्थः॥ आदिशब्देनआप्तकामत्वेनप्रयोजनापेक्षानुपपत्तिःसंगृहीताकल्पनयाप्यव्यतिरिक्तस्यजीवस्यसत्वात्तस्यसंसारोनात्मनःत
दीयकर्मफलदानार्थंचआप्तकामस्यापिसृष्ट्यादिप्रवृत्तिःसंभवतिसर्वव्यवहारस्यापिस्वप्नतुल्यत्वाद्वास्वप्नइवसर्वमप्युपपद्यतेसूत्रभाष्यादावेव

राजप्रमाणबाहुगुप्तेइहात्मैकत्वविषयेइत्येतेनाविद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्वाद्ब्रह्मणःसृष्ट्या॥ दि
तीत्वेसाधनाद्यभावोदोषःप्रत्युक्तोवेदितव्यः॥ परैरुक्तआत्माऽनर्थकर्तृत्वादिदोषश्च॥ यस्तुदृष्टांतोराज्ञःसर्वार्थकारिणिकर्तृत्वेप्युपचा
राद्राजाकर्तेतिसोत्रानुपपन्नः॥ सईक्षांचक्रेइतिश्रुतेर्मुख्यार्थबाधनात्प्रमाणभूतायास्तत्रहिगौणीकल्पनाशब्दस्ययत्रमुख्यार्थोनसंभ
वतीहत्वचेतनस्यमुक्तबद्धपुरुषविशेषापेक्षयाकर्तृकर्मकालनिमित्तापेक्षयाचबंधमोक्षादिफलार्थीनियतापुरुषंप्रतिप्रवृत्तिर्नोपप
द्यते॥ यथोक्तसर्वज्ञेश्वरकर्तृत्वपक्षेतूपपन्ना॥ परिहृतइत्यर्थः॥ सांख्येनस्वपक्षेपुरुषशब्दस्यईक्षणस्यचोपपत्तिमुक्तामनूद्यनिराकरोति॥ यस्त्वि
ति॥ यजमानःप्रस्तरइत्यादौउपचारोदृष्टःइत्याशंक्याह॥ तत्रहिगौणीति॥ प्रधानपक्षेनकेवलमीक्षणश्रुत्यनुपपत्तिःवस्तुतस्तस्यस्रष्टृत्वमपिन
संभवतीत्याह॥ इहत्विति॥ मुक्तान्वर्जयित्वाबद्धान्प्रत्येवप्रवृत्तिः॥ कर्तृकर्माद्यपेक्षयाबंधमोक्षादिशब्दितभोगापवर्गार्थाव्यवस्थितप्रवृत्ति
र्नोपपद्यतइत्यर्थः॥ अनेनपुरुषार्थप्रयोजनमुररीकृत्यप्रधानंप्रवर्ततइतियदुक्तंशंकावसरेतन्निरस्तंईश्वरकारणवादेतुनकोपिदोषइत्याह॥

प्र·उ· एवंपरपक्षंनिराकृत्यप्रकृतश्रुतिव्याख्यानंकुर्वन्सप्राणमसृजतेत्यस्यतात्पर्यार्थमाह॥ ईश्वरेणैवेति॥ राज्ञेवेत्यर्थः॥ अक्षरार्थंप्रश्नपूर्वकमाह॥ क टी·
३९ थमिति॥ हिरण्यगर्भाख्यमिति॥ हिरण्यगर्भइत्याख्यायेनोपाधिनाआत्मनोभवतितंबुध्यभिन्नंसर्वप्राणंसमष्टिप्राणमित्यर्थः॥ यथाश्रुतेकस्मिन्वहमु
क्रांतइत्यादिनाआत्मनउत्क्रांत्याद्युपाधिसृष्टेः प्रस्तुतत्वात्हिरण्यगर्भस्यजीवत्वात्तथात्वादुपक्रमविरोधापत्तेः हिरण्यगर्भाख्यमित्युक्तिस्तुआत्मनो
हिरण्यगर्भादिसंसारिभावोपिएतदुपाधिकइतिसूचयितुमितिबोध्यंतस्यसमष्टित्वमाह॥ सर्वेति॥ अंतरात्मानमिति॥ सर्वस्थूलशरीरांतरत्वादात्मव

ईश्वरेणैवसर्वाधिकारीप्राणःपुरुषेणसृज्यते॥ कथंसपुरुषउक्तप्रकारेण ईक्षित्वासप्राणंहिरण्यगर्भाख्यंसर्वप्राणिकरणाधारमंतरात्मा

सप्राणमसृजतप्राणाच्छ्रद्धां॥ खंवायुर्ज्योतिरापः पृथिवींद्रियंमनो

नमसृजतसृष्ट्वान्॥ अतःप्राणाच्छ्रद्धांसर्वप्राणिकर्महेतुभूतां॥ ततःकर्मफलोपभोगसाधनाधिष्ठानानिकारणभूतानिमहाभूतान्यसृ
जत॥ खंशब्दगुणं

द्विगोचरत्वाच्चांतरात्मासइत्यर्थः॥ ततइति॥ आनंतर्यार्थेयंपंचमीएवमुत्तरत्रापि॥ नचभूतकार्यत्वात्प्राणस्यकथंनतःपूर्वका
लीनत्वमितिवाच्यंसत्यंसूक्ष्मभूतसृष्ट्यनंतरंप्राणमसृजतेतिकल्पनीयत्वात्॥ नचैतदनंतरंभूतसृष्ट्युक्तिविरोधःशंक्यःतस्याःपंचीकृतस्थूलभूतविष
यत्वोपपत्तेःअतएवभोगसाधनाधिष्ठानानीत्युक्तंसूक्ष्माणांतथात्वायोगात्॥ नचैवमपिस्थूलभूतसृष्ट्यनंतरमिंद्रियमनःसृष्ट्युक्तिविरोधःभूतारब्ध
देहाधिष्ठितानामेवतेषांकार्यक्षमत्वेनतेषांतदनंतरत्वोक्तिरितिभावः भोगसाधनाधिष्ठानत्वंभूतानांतत्कारणत्वादित्याह॥ कारणभूतानीति॥ तेषां राम:
भूतानांलक्षणतयाशब्दगुणमित्यादिनाअसाधारणगुणाःउक्ताः॥ पूर्वपूर्वगुणानुवृत्तिस्तुपूर्वपूर्वस्योत्तरोत्तरोपादानत्वसूचनार्थस्येत्यल्पतारत ३९

म्य सिध्यर्थं च उक्ते ति बोध्यं॥ वायुमिति॥ श्रुतौ वायुरित्यादि प्रथमा: द्वितीयार्थी:॥ प्राणमसृजतेति द्वितीयायोपक्रमात्॥ तैरेवेति॥ अपंचीकृतावस्थापन्नि
त्यर्थः॥ तस्य चेश्वरमिति नियामकमित्यर्थ:॥ संकीर्यमाणानामिति॥ अविशुद्धसत्वतया पापाचरणेन तै: पापै: संकीर्यमाणानां संकरपरिहाराय चित्त

वायुं स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणं तथा ज्योति: स्वेन रूपेण पूर्वाभ्यां च विशिष्टं त्रिगुणं शब्दस्पर्शाभ्यां॥ तथाऽपो रसेन गुणेना
साधारणेन पूर्वगुणावेशेन च चतुर्गुणा: तथा गंधगुणेन पूर्वगुणानुप्रवेशेन पंचगुणा पृथिवी तथा तैरेव भूतैरारब्धमिंद्रियं द्विप्रकारं बुद्ध्य
र्थं कर्मार्थं च दशसंख्यं॥ तस्य चेश्वरं मंतस्थं संशयसंकल्पलक्षणं मनः॥ एवं प्राणिनां कार्यं करणं च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षण

अन्नमन्नाद्वीर्यं तपो मंत्राः कर्म लोकाः लोकेषु च नाम च ॥

मन्नं ततश्चान्नादद्यमानाद्वीर्यं सामर्थ्यं बलं सर्वकर्मप्रवृत्तिसाधनं तद्वीर्यवतां च प्राणिनां तपो विशुद्धिसाधनं संकीर्यमाणानां॥ मंत्रास्तपो
विशुद्धांतर्बहिःकरणेभ्यः कर्मसाधनभूता ऋग्यजुःसामाथर्वांगिरसः ततः कर्माग्निहोत्रादिलक्षणं ततो लोकाः कर्मणां फलं तेषु च सृष्ट
नां नाम च देवदत्तो यज्ञदत्त इत्यादि॥ एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचंद्रमशकमक्षि
काद्याः स्वप्नदृक्सृष्टा इव च सर्वे पदार्थाः
प्राणिनां
शुद्धिसाधनं तपोऽसृजतेत्यर्थः॥ फलमिति॥ लोक्यते भुज्यत इति लोकः फलमित्यर्थः॥ नाम चेति॥ ब्राह्मणा
दिनाम्नाउक्तव्यवहारासंकरार्थमित्यर्थः॥ नन्वीश्वरसृष्टत्वात्कलानां सत्यत्वमंगीकर्तव्यमारोपे शुक्तिरजतादौ सृष्टत्वव्यवहाराभावादित्याशंक्य अंगुल्य
वष्टंभनेत्रमर्दनादिना प्रयत्नेन सृष्टस्य द्विचंद्रमशकमक्षिकादेरारोपत्वदर्शनात् अथ रथान् रथयोगान्पथः सृजत इति सृष्टत्वेनोक्तस्वप्नपदार्थस्य च भ्रमत्वद

अविद्याकामकर्मादिदोषरूपं यद्बीजं तदपेक्ष्यातत्साधनीकृत्येत्यर्थः॥तैमिरिकशब्दो नेत्रे अंगुल्यवष्टंभाद्युपलक्षणार्थः॥एवमात्मप्रतिपत्त्यर्थमध्या
रोपमुक्त्वा तदपवादमवतारयति॥पुनस्तस्मिन्नेवेति॥ग्रामादिवद्धेदेन गंतव्यत्वभ्रमं वारयति॥आत्मभाव इति॥अस्तशब्देन नाशो नाभिधीयते॥भे
दकोपाधिनामरूपयोर्नाशेपि स्वरूपस्य समुद्रात्मना विद्यमानत्वादित्याह॥नामरूपतिरस्कारमिति॥पूर्वरूपतिरस्कारमित्यर्थः॥तद्वस्त्विति॥ना

पुनस्तस्मिन्नेव पुरुषे प्रलीयंते हित्वा नामरूपादिविभागं॥कथं सदृष्टांतः यथा लोके इमा नद्यः स्यंदमानाः स्रवंत्यः समुद्रायणाः समुद्रअय
नं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छंति तासां चास्तं गतानां भिद्येते विनश्येते नामरूपे

स यथेमा नद्यः स्यंदमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छंति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्र
ष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छंति॥ गंगा यमुनेत्यादिलक्षणे तद्भेदे समुद्र इत्येवं प्रोच्यते॥तद्वस्तूदक
लक्षणं॥एवं यथायं दृष्टांत उक्तलक्षणस्य प्रकृतस्यास्य पुरुषस्य परिद्रष्टुः परिसमंताद्द्रष्टुः दर्शनस्य कर्तुः स्वरूपभूतस्य यथार्कः स्वात्मप्र
काशस्य कर्ता सर्वतस्तद्वदिमाः षोडशकलाः प्राणाद्या उक्ताः कलाः पुरुषायणाः नदीनामिव समुद्रः पुरुषो मरूपनाशानंतरं परिशिष्टं उदकल
क्षणं वस्तु समुद्र इत्येवोच्यत इत्यन्वयः॥पुरुषस्येति॥कर्मणि षष्ठी॥पुरुषं स्वात्मरूपं परितः सर्वस्वरूपत्वेन पश्यत इत्यर्थः॥द्रष्टुरित्युक्ते आगंतु
कस्य दर्शनस्य कर्ता प्रतीयत इत्यत आह॥दर्शनस्य स्वरूपभूतस्येति॥स्वरूपत्वे दर्शनस्य तत्र कर्तृत्वानुपपत्तेस्तदर्थं कर्तृत्वं प्रत्यपविरोध इत्या
शंक्य अर्कः सर्वतः स्वप्रकाशक इत्यत्र यथा कर्त्रर्थकस्य प्रत्ययस्योपचरितत्वं तद्वदिहापीत्याह॥यथार्क इति॥नदीनामिवेति॥इवशब्दस्तथाश

ऽयनमित्यन्वयः॥अस्तगमनस्वरूपमाह॥भिद्येतेइति॥नामरूपभेदएवअस्तगमनमिहेत्यर्थः॥यथास्तमिति॥यस्ययत्स्वरूपंप्राणाद्यात्मकंतद
पिभिद्यतइत्यन्वयः।पुरुषः इत्येवंप्रोच्यतइत्यस्यार्थमाह॥भेदेचेति॥यदनष्टमिति॥कलानांहिरूपमारोप्याधिष्ठानोभयात्मकंसत्यानृतमिथुनरूपं
तत्रारोप्यस्यनामरूपात्मकस्यभेदेअधिष्ठानात्मकंरूपंपुरुषात्मनाउच्यतइत्यर्थः यथासमुद्रस्वरूपभूतंजलंमेघेराकृष्याभिवृष्टंगंगादिनामरूपोपा

ऽयनमात्मभावगमनंयासांकलानांताःपुरुषायणाःपुरुषंप्राप्यपुरुषात्मभावमुपगम्यतथैवास्तंगच्छंति॥भिद्येतेचासांनामरूपेकला
नांप्राणाद्याख्यारूपंचयथास्वंभेदेचनामरूपयोर्यदनष्टंतत्त्वंपुरुषइत्येवंप्रोच्यतेब्रह्मविद्भिः॥यएवंविद्वान्गुरुणाप्रदर्शितकलाप्रलय

भिद्येतेचासांनामरूपेपुरुषइत्येवंप्रोच्यते॥सएषोऽकलोऽमृतोभवतितदेषश्लोकः॥अराइवरथनाभौकलायस्मिन्प्रतिष्ठि
ताः॥

मार्गःसएषविद्ययाप्रविलापितास्वविद्याकामकर्मजनितासुप्राणादिकलास्वकलोऽविद्याकृतकलानिमित्तोहिमृत्युस्तदप
गमेऽकलत्वादेवामृतोभवतितदेतस्मिन्नर्थेएषश्लोकः॥अराइवयथाचक्रपरिचाराइवरथनाभौरथचक्रस्यनाभौयथाप्रवेशितास्तदाश्रयाभवंति
यथातथेत्यर्थः॥कलाःप्राणाद्याःयस्मिन्

धिनासमुद्राद्भिन्नमिवव्यवह्रियमाणंतदुपाधिविगमेसमुद्रस्वरूपमेवप्रतिपद्यते॥एवमविद्याकृतना
मरूपोपाधिवशादात्मनोभिन्नमिवस्थितंसर्वंजगद्विद्ययाअविद्याकृतनामरूपविगमेब्रह्ममात्रतयाऽवशिष्यतइत्यर्थः॥एवंप्राणादिकलोपाधिकआ
त्मनःउत्क्रमणादिशब्दितमरणादिव्यवहारइत्युक्तेःप्रयोजनंप्राणादिनिवृत्तौउत्क्रमणादिसर्वसंसारधर्मरहितात्मस्वरूपावस्थानरूपंदर्शयितुंसए
षइतिवाक्यंव्याचष्टे॥यएवंविद्वानित्यादिना॥परिचाराइति॥नाभेःपरितःनाभौनेम्यांचप्रोताःतिर्यक्काष्ठविशेषाइत्यर्थः॥यथाप्रवेशिताइति ॥

प्र·उ· यथावत्सम्यक्प्रवेशितादृत्यर्थः॥ माडोऽर्थंव्यतिरेकप्रदर्शनेनस्पष्टयति॥ नचेदिति॥ शिष्याणांकृतार्थताबुद्धिजननार्थंतानित्यादिवाक्यंव्याच टी·
४० ष्टे॥ तानेवमिति॥ प्रकिरणेनेतिप्रक्षेपेणेत्यर्थः पितृत्वंतवेति॥ जनकश्चोपनेताचयश्चविद्यांप्रयच्छति॥ अन्नदाताभयत्राता पंचैतेपितरःस्मृताः॥

पुरुषेप्रतिष्ठिताउत्पत्तिस्थितिलयकालेषुतंपुरुषंकलानामात्मभूतंवेद्यंवेदनीयंपूर्णत्वात्पुरुषंपुरिशयनाद्वावेदजानीयात्यथाहे शिष्याःमावोयुष्मान्मृत्युःपरिव्यथामापरिव्यथयतुनवेदहिज्ञायेनपुरुषोमृत्युनिमित्तांव्यथामापन्नादुःखिनएवयूयंस्थअतस्तन्माभूद्यु ष्माकमित्यभिप्रायः॥ तानेवमनुशिष्यशिष्यान्॥ तान्होवाचपिप्पलादःकिलएतावदेववेद्यंपरंब्रह्मवेदविजानाम्यहमेतन्नातोस्मात्परमस्ति प्रकृष्टतरंवेदितव्यमित्येवमुक्तवान्शिष्याणामविदितशेषास्तित्वाशंकानिवृत्तयेकृतार्थबुद्धिजननार्थंचततस्तेशिष्यागुरुणानुशिष्टास्तं

तंवेद्यंपुरुषंवेदयथामावोमृत्युःपरिव्यथाइति॥ तान्होवाचैतावदेवाहमेतत्परंब्रह्मवेदनातःपरमस्तीतिततेतमर्चयंतस्त्वं हिनःपितायो

गुरुंकृतार्थाःसंतोविद्यानिष्क्रयमपश्यंतःकिंकृतवंतइत्युच्यते॥ अर्चयंतःपूजयंतःपादयोःपुष्पांजलिप्रकिरणेनप्र णिपातेनचशिरसाकिमूचुरित्याह॥ त्वंहिनोऽस्माकंपिताब्रह्मशरीरस्यविद्ययाजननपितृत्वात्नित्यस्याजरामरस्याभयस्ययस्त्वमेवास्माकमवि द्यायाःविपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्राहादविद्यामहोदधेर्विद्याप्लवेनपरमपुनरावृत्तिलक्षणंमोक्षाख्यमहोदधेरिवपा रंतारयस्यस्मानदृत्यतःपितृत्वंतवास्मान्प्रत्युपपन्नं॥

तिस्मनेरित्यर्थः॥ योऽस्माकमिति॥ हेतूक्तेस्तात्पर्यंवदन्पितृत्वोक्तिमात्रेणविद्यानिष्क्रया र्थंकिंदत्तमित्यपेक्षायांस्वशरीरमेवपरिचारकतयादास्यभावेनगुरवेदत्तमित्याह॥ इतरस्मादिति॥ पितृत्वादेवकिंपूज्यनएत्वंपरिचार्यत्वंस्वामित्वंकिमुव

रामः
४०

अतएववाजसनेयकेमांचापिसहृदास्सायेतोस्युक्तमितिभावः॥ ॥इतिश्रीम॰परिव्राजकाचार्यश्रीमत्कैवल्येंद्रशिष्यज्ञानेंद्रगुरुचरणसेविनाराय
इतरस्मादितरोपिहिपिताशरीरमात्रंजनयतितस्यापिसप्रपूज्यतमोलोकेकिमुवक्तव्यमात्यंतिकाभयस्यदातुरित्यभिप्रायः॥नमःपरम
ऽस्माकमविद्यायाःपरंपारंतारयसीतिनमःपरमऋषिभ्योनमःपरमऋषिभ्यः॥६॥भद्रंकर्णेभिरिति॰॥इतिप्रश्नोपनिषत्॥
ऋषिभ्योब्रह्मविद्यासंप्रदायकर्तृभ्योनमःपरमर्षिभ्यइतिद्विर्वचनमादरार्थं॥ ॥इतिश्रीगोविंदभगवत्पूज्यपादशिष्यस्यपरमहंसपरि
व्राजकाचार्यश्रीशंकरभगवतःकृतावाथर्वणोपनिषत्प्रश्नभाष्यंसमाप्तं॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥
णेंद्रसरस्वतीविरचितंप्रश्नोपनिषद्भाष्यविवरणंसमाप्तं॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ॥ ❦ ।

वाराणसीप्रसादस्यनियोगेनतुयत्नतः॥काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमेमहल्लेहौदकटोराश्रीबाबूवाराणसी
प्रसादजीकेमकानमेकाशीसंस्कृतमुद्रायंत्रमेछपीजिनकोलेनाहोयउनकोश्रीबाबूवाराणसीप्रसादजीकेपासयाकचौरीगलीमेभाईप्रतापसिं
हजीकेदुकानपरमिलेगी संवत् १९४१

